सुरोत्तमेन पानीयेन त्रिर्मूर्धन्यभिषिञ्चेत्[1]। तस्मात् सुरोत्तमा ह्यापोऽद्भिरेवाभिषेचयेदिति गृह्यासंग्रहकारेणोक्तम् [ गृ स २, ४१ ][2]।

हे काम वेद जानाम्यहं ते तव नाम। किं पुनस्तत्। मदो नामासि मदननामा त्वमसि भवसि मदहेतुत्वात्। यत ईदृशस्त्वमतः समानय सम्यगानय प्रापय अमुं अमुकनाम्नीं कन्यां प्रति[3] परिणेतारम्। किञ्च सुरा ते अभवत्। ते इति चतुर्थ्यन्तमेतत्। त्वदुत्पत्त्यर्थं सुरा भूतेत्यर्थः। सुरया हि काम उत्पद्यते। तथा चोक्तम्

रस एष मदनस्य यत् सुरेति।

वृद्धाश्चाहुः

गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा।
चतुर्थी स्त्री सुरा ज्ञेया ययेदं मोहितं जगत्॥
माद्यति प्रमदां दृष्ट्वा सुरां पीत्वा च माद्यति।
यस्माद्दृष्टिमदो नारी तस्मादेषा सुरा स्मृता॥[4]
वसिष्ठश्चन्द्रमाः शक्रो[5] देवाचार्यः पितामहः।
तपोवृद्धा वयोवृद्धाः सर्वे ते स्त्रीविमोहिताः॥ इति[6]।

परमत्र जन्माग्ने अत्रैतस्यां कन्यायां हे अग्ने अग्रे नेतः तव परं जन्म।

1 *Go. Gr.* 2, 1, 10—सुरोत्तमेन सशरीरां त्रिर्मुर्धन्यभिषिञ्चेत्।

2 The word सुरा in सुराप्लवन stands for water. सुरा is enumerated in the *Nighaṇṭu* ( I, 12, 25 ) among the names of water. Bhadkamkar in his edition of the *Nighaṇṭu* ( Bombay Sanskrit and Prakrit Series, p. 4 ) has however adopted the reading सिरा, relegating the variant सुरा into the foot-note. His contention in this connection that सुरा as a synonym of water 'is not supported by any quotation' is disproved by the texts quoted here from the *Gṛhyasūtra* and *Gṛhyāsaṃgraha*.

3 B पतिं

4 Viśveśvara Sarasvatī quotes in his *Yatidharmasaṃgraha* ( p. 104 ) a verse from Vyāsa couched in almost the same language: माद्यति प्रमदां दृष्ट्वा सुरां पीत्वा च माद्यति। तस्माद्दृष्टमदां नारीं दूरतः परिवर्जयेत्॥ Cf. पुमान् वै सोमः स्त्री सुरा—*T. Br.* 1. 3. 3. 4.

5 B कामो

6 M omits the whole quotation beginning with वृद्धाश्चाहुः.

**अग्निपूर्वकमिव कामपूर्वकं सर्वं कर्म प्रवर्तत इत्यतः काम एव सम्बोध्यत अग्न इति। कन्या हि नाम कामस्योत्कृष्टमुत्पत्तिस्थानं वर्तत इत्यर्थः। तपसो निर्मितोऽसि। तपः पुरुषार्थसाधनम्। तदर्थं त्वं निर्मितः सृष्टोऽसि। प्रजापतिनेति वाक्यशेषः। य इत्थम्भूतस्त्वं तस्मै स्वाहा। स्वाहेति हविर्दानाभिधानम्। एतदाज्यं हविस्तुभ्यं ददामीत्यर्थः। एवमन्येष्वपि स्वाहाकारेषु योज्यम् ॥२॥**

सर्वकर्मसाधारणपर्युक्षणसाधनो मन्त्रो व्याख्यातः। अथ विवाहाङ्गभूता मन्त्रा व्याख्यायन्ते। तत्र काम वेद त इत्यादिमन्त्रत्रयस्याप्लवने विनियोगोऽस्ति। वधूवरयोर्विवाहाङ्गभूतं शुद्ध्यर्थमाप्लवनम्। तथा च सूत्रम् [ खा गृ १, ३, ३ ] तयोराप्लवनं पूर्वमिति। जायापत्योस्तयोर्विवाहात् पूर्वमाप्लवनं कर्तव्यमित्यर्थः। तयोर्मध्ये पत्युराप्लवनं समावर्तनसमये वक्ष्यते। इदानीमेतैर्मन्त्रैः स्त्रिया आप्लवनमुच्यते। तथा च सूत्रकारः [ खा गृ १, ३, ४ ] मन्त्राभिवादात्तु पाणिग्रहणस्य पूर्वं व्याख्यातमिति। वध्वाः पाणिर्गृह्यतेऽस्मिन्निति पाणिग्रहणं विवाहः। तत्काले वध्वा आप्लवनं मन्त्रलिङ्गानुसारेण कर्तव्यमिति सूत्रार्थः[1]। तुशब्दो वैलक्षण्यद्योतनार्थः। पुरुषस्य तु सर्वाङ्गस्यौदकमाप्लवनं वध्वाः सुरया उपस्थाप्लवनमात्रमिति वैलक्षण्यम्। न च प्रथममन्त्र उक्तरूपमाप्लवनं न प्रतीयत इति वाच्यमत्रापि कामशब्देनोत्तरमन्त्रयोरिवोपस्थाप्लवनप्रतीतेः। सूत्रगतपूर्वशब्देनाप्ययमर्थो लभ्यते। यत् पूर्वमाप्लवनं पूर्वमन्त्रद्योतितसुरासाधनकं तदेवोत्तरमन्त्राभ्यामपि कर्तव्यमित्येवमर्थं सूत्रे पूर्वमित्युक्तमिति गृह्यभाष्यकृता रुद्रस्कन्देन व्याख्यातत्वात् [ खा गृ १, ३, ४ ]।

तत्र प्रथमं मन्त्रमाह कामेति। अस्य ऋषिः परमेष्ठी प्रजापतिः कामो देवता प्रस्तारपङ्क्तिश्छन्दः।

हे काम कमनीयानन्देन्द्रियाभिमानिदेव ते तव नाम अभिधानं वेद जानाम्यहम्। किं तदिति चेदुच्यते। मदो मदकरः। एतन्नामा त्वमसि भवसि। सर्वेषां मदकारित्वात् तव मदनाम सम्पन्नमित्यर्थः। उक्तनामा त्वम् अमुं कन्यां विवोढारं समानय सम्यक् प्रापय कन्यकया संयोजयेत्यर्थः। ते तवोत्पत्तये सुरा अभवत्। अत्र सुराशब्दः पिष्टमिश्रोदकवाची मुख्यसुराया अस्पृश्यत्वादनाचाराच्च। सुरया हि कामोत्पत्तिरुक्ता। रस एव मदनस्य सुरा येति। हे अग्ने सर्वत्र काम्येषु पदार्थेषु गमनादग्निवद्विहरणसामर्थ्याद्वा अग्निरिति काम उच्यत उपचारात्। एवम्भूतस्य तव अत्रास्यां कन्यकायां परमुत्कृष्टं जन्म जननम्। स्त्रियां हि काम उत्पद्यत इति प्रसिद्धम्। एवं महानुभावस्त्वं तपसः सिसृक्षोः प्रजापते-

1 See Rudraskanda on *Kh. Gṛ.* and *Drāhyāyaṇa Gṛ.* 1, 3, 4.

स्तपसः सकाशात् निर्मितोऽसि। प्रजापतिः प्राणिनां भोगार्थं तपस्तप्त्वा त्वां सृष्टवानित्यर्थः। या त्वं स्वाहा दक्षस्य प्रजापतेः सम्बन्धिनीत्यर्थः। स्वाहाकारस्योत्पत्तिस्तैत्तिरीये स्पष्टमाम्नाता [ तै ब्रा २, १, २, २-३ ] तद्यच्चिकित्सज्जुहवानी मा हौषामित्युपक्रम्य तं वागभ्यवदज्जुहुधीति। सोऽब्रवीत् कस्त्वमसीति। स्वैव ते वागित्यब्रवीत्। सोऽजुहोत् स्वाहेति। तत् स्वाहाकारस्य जन्मेति। यद्वा प्रजापतिना सृष्टा वाक् स्वमात्मानं प्राहेति स्वाहाकारव्युत्पत्तिः। अथवाऽत्र स्वाहेति हविरभिधानम्। एतत् सुराख्यमाप्लवनसाधनं हविस्तुभ्यं ददामीत्यर्थः। स्वाहाशब्दं यास्को [ निरु ८, २० ] बहुधा निरुवाच—सु आहेति वा स्वा वागाहेति वा स्वं प्राहेति वा स्वाहुतिं हविर्जुहोतीति वेति। एवमुत्तरत्र स्वाहाशब्दोऽवगन्तव्यः ॥२॥

इमं त उपस्थं मधुना संसृजामि प्रजापतेर्मुखमेतद् द्वितीयम्।
तेन पुंसोऽभि भवासि सर्वानवशान् वशिन्यसि राज्ञी स्वाहा ॥३॥

[ गो गृ २, १, १० द ]

**मध्येज्योतिरियं जगती। उपस्थरूपः कामो देवता। उपस्थप्लावने ज्ञातीनां कर्मणि विनियोगः।**

**हे कन्यके इमं ते तव उपस्थम् आनन्देन्द्रियं मधुना मद्येन[1] संसृजामि संयोजयामि। यतः प्रजापतेर्मुखमेतद् द्वितीयम्। द्विमुखो हि प्रजापतिः। एकं मुखं ब्रह्मग्रहणार्थं द्वितीयं प्रजोत्पादनार्थम्। मुखतो हि प्रजा असृजदिति श्रुतेः[2]। यतः तेन सर्वान् अवशान् अपि पुंसः अभिभवासि वशीकरोषि। वशिनी—वश कान्तौ—कान्तिमती। असि भवसि। राज्ञी स्वामिनी सर्वकामानाम्। तेनैव हेतुभूतेन अभिभवसीत्यर्थः ॥३॥**

अथ द्वितीयमन्त्रमाह इमं त इति। अस्योक्तो विनियोगः। मध्येज्योतिश्छन्दः। उपस्थरूपः कामो देवता 'या तेनोच्यते सा देवते'ति ( सर्वानुक्र २, ५ ) न्यायात्।

हे विवोढव्ये कन्यके ते तवेममुपस्थमानन्देन्द्रियं मधुना—मधुशब्दोऽप्यत्र पिष्टोदकवाची तेन—संसृजामि आप्लावयामीत्यर्थः। एतदुक्तं तदेवेन्द्रियं प्रजापतेर्जगत्स्रष्टुर्द्वितीयं मुखं मुखस्थानीयमित्यर्थः। प्रजापतेर्हि मुखद्वयं मन्त्रोत्पादकमेकं प्रजोत्पादकं द्वितीयमिति। मुखतो हि प्रजा असृजदिति श्रुतेः[2]। तेन तथाविधेन प्रजापतेर्मुखस्थानीयेन्द्रियेण

1 A आज्येन

2 Cf. *T. Br.*, 2, 2, 9, 8.

सर्वानवशान् यत्नेन वशीकर्तव्यान् पुंसः पुंस्त्वोपेतान् अभिभवसि स्वोपत्नीणान् करोषीत्यर्थः। यतस्त्वं वशिनी असि[1]। वशीकरणसमर्थेषां भवसि। राज्ञी सर्वेषां प्राणिनामीश्वरी वाऽसि। अतोऽभिभवसीत्यर्थः। उक्तः स्वाहाशब्दस्यार्थः ॥३॥

अग्निं क्रव्यादमकृण्वन् गुहानाः स्त्रीणामुपस्थमृषयः पुराणाः।
तेनाज्यमकृण्वंस्त्रैश्टृङ्गं त्वाष्ट्रं त्वयि तद्दधातु स्वाहा ॥४॥

[ गो गृ २. १. १० इ ]

उपरिष्टाज्ज्योतिरियं त्रिष्टुप्। उपस्थरूपः कामो देवता। पूर्ववद्विनियोगः।

अग्निं वह्निं क्रव्यादं कायभक्षं मांसाशिनमित्यर्थः। अकृण्वन् कृतवन्तः। के—ऋषयः वसिष्ठाद्याः। किम्भूताः—गुहानाः—गुहू संवरणे—उपगूहमानाः। पुराणाः आद्याः। कासाम्—स्त्रीणाम्। किम्—उपस्थम् आनन्देन्द्रियम्। तेन उपस्थेन्द्रियेण आज्यं शुक्रम् अकृण्वन् कृतवन्तः। त्रिशृङ्गस्येदं त्रैश्टृङ्गम्। त्वष्टुरिदं त्वाष्ट्रम्। त्वयि कन्यकायां तत् रेतः दधातु स्थापयतु। त्रिशृङ्गो वृषभो मन्त्रवर्णात्। त्वष्टा वै रेतः सिक्तं विकरोतीति[2] वचनात् तत्कर्मनियोगाद्रेत आज्यं गर्भव्यक्तिरिति ॥४॥

अथ तृतीयमन्त्रमाहाग्निमिति। अस्योपरिष्टाज्ज्योतिस्त्रिष्टुप् छन्दः। उपस्थरूपः कामो देवता। उक्तो विनियोगः।

स्त्रीणामुपस्थमानन्देन्द्रियं क्रव्यादं मांसभक्षकमग्निमकृण्वन् कृतवन्तः। के—ऋषयोऽतीन्द्रियद्रष्टारो वसिष्ठाद्याः। कीदृशाः—गुहानाः स्वसृष्टं परेषामप्रकाशाय गूहयन्तः। पुराणाः आद्याः। तथा तेनोपस्थेन्द्रियेण निमित्तेन। त्रैश्टृङ्गम्। शृङ्गशब्दोऽङ्कुरवाची तत्रैतच्छृङ्गमुत्पतितमिति श्रुत्यन्तरात्। त्रीणि शृङ्गाण्युन्नतावयवा यस्येति त्रिशृङ्गो वृषभस्तत्सम्बन्धि। त्वाष्ट्रं[1] त्वष्टा सिक्तस्य रेतसो विकरणेन तत्सम्बन्धि। रेतः आज्यमकृण्वन् कृतवन्तः। अथोपस्थो रेतश्च अग्न्याज्यत्वेन निरूप्यते होमसम्पादनाय। हे उपस्थेन्द्रिय अग्नित्वेन निरूपिते त्वयि तद्रेतस्त्वेन निरूपितम् आज्यं दधातु स्थापयतु। उक्तः स्वाहाशब्दः। अत्राप्याज्यशब्देन पिष्टोदकमुच्यते। तत् पिष्टोदकमाप्लवनसाधनम्।

1 M सि अकारलोपश्छान्दसः
2 *Śāṅkh. Br.* 3, 9. Cf. also *Śat. Br.* 1, 9, 2, 10 etc.—त्वष्टा वै सिक्तं रेतो विकरोति।

हे उपस्थेन्द्रिय त्वयि दधातु स्थापयतु। एवं गृह्यभाष्यकृन्मखस्वाम्यनुसारेण सुरामध्वाज्यशब्दानां पिष्टोदकपरतया व्याख्यानं कृतम्[1] ॥४॥

**अहतेन वाससा तां पतिः[2] परिदधदाह**

## या अकृन्तन्नवयन् या अतन्वत याश्च देव्यो अन्तानभितो ततन्थ[3]।
## तास्त्वा देव्यो जरसा संव्ययन्त्वायुष्मतीदं परिधत्स्व वासः ॥५॥

[ अ स १४, १, ४५—या देवीरन्ताँ अभितोऽददन्त ; आप म २. २. ५ ; पा गृ १, ४, १३—याश्च देवीस्तन्तून् ; हि गृ १. ४. २ ; मा गृ १, १०, ८—याश्च ग्ना देव्योऽन्तानभितोऽततन्थ ]

**जगत्यस्य च्छन्दः। वस्त्रपरिधाने विनियोगः। वस्त्रनिष्पादयित्र्यो देवताः।**

**याः स्त्रियः इदं वस्त्रं परिधीयमानम् अकृन्तन् कर्तितवत्यः। या अवयन् याश्च स्त्रियो व्यूतवत्यः—वेञ् तन्तुसन्ताने—तन्तुसन्तानं कृतवत्यः। याः स्त्रियः। च-शब्दोऽनुक्तपरिग्रहार्थः[4]। देव्यः दानादिगुणयुक्ताः अन्तान् पटसक्तान् अभितः उभयपार्श्वयोरपि ततन्थ ग्रथितवत्यः। तिङां तिङो भवन्तीति प्रथमपुरुषबहुवचनार्थे मध्यमपुरुषैकवनम्। ता देव्यः हे कन्ये त्वा त्वां जरसा**

1 See Rudraskanda (*Makhasvāmin*) on *Kh. Gṛ.* 1, 3, 4: मध्वाज्यशब्दाभ्यामपि सुरैव लक्षणयोच्यते। सुरेति चात्र पिष्टसंयुक्तमुदकम्।

2 Used in the causative sense ( अन्तर्भावितण्यर्थ ) as in *Go. Gṛ.* 2. 1. 18: अहतेन वसनेन पतिः परिदध्यात्

3 The authors of the *Vedic Variants* (vol. II, 63) remark: "The reading *tatantha* could only intend a monstrously augmented form *atatantha*, because of the preceding *abhito* (note sandhi). Roth *ZDMG* 48, 108 considers it obvious that *tatantha* is a corruption for *'dadanta*. In PG, however, the corruption has become infectious, because there *antān* is further changed to *tantūn* under the influence of *tatantha*. The comm. on PG treats the muddle of the text as Vedic license." See Devapāla's commentary on *Laugākṣi Gṛ.* 25, 4 adopting अभितोऽततन्थ.

4 B[1] M ०ऽनुक्तसमुच्चयार्थः

**जरान्तं यावत् संव्ययन्तु परिधापयन्त्वित्यर्थः। हे आयुष्मति दीर्घायुषि इदं प्रकृतं[1] वासः परिधत्स्व अन्तरीयं[2] कुरु ॥५॥**

अथ स्नातां कन्यकां या अकृन्तन्नित्यनेनाधरवस्त्रं परिधापयेत् परिधत्तेत्युत्तरेणोत्तरं वासः परिधापयेन्मन्त्रलिङ्गात्। सूत्रकारस्तु सहैव विनियुक्तवान्। तथा च सूत्रम् ( खा गृ १, ३, ६ ) स्नातामहतेनाच्छाद्य या अकृन्तन्निति ।

अस्य छन्दो जगती। वस्त्रनिष्पादयित्र्यः स्त्रियो देवताः। पतिः स्वयमेव कन्यकां वस्त्रं परिधापयन्नाह ।

देव्यः[3] द्योतमाना या या आद्याः स्त्रियो वस्त्रम् अकृन्तन् कर्तनेन कृतवत्यः वसनान्तसम्बद्धोभयदशापुच्छं छिन्नवत्य इत्यर्थः। याश्च देव्यः अवयन् उतवत्यः तन्तुसन्दर्भमकुर्वन्नित्यर्थः। याश्च देव्यः अतन्वत विस्तारितवत्यः अतिदीर्घायामविस्तारयुक्तं कृतवत्य इत्यर्थः। याश्च देव्यः स्त्रियः अन्तान् वस्त्रस्यान्तप्रदेशान् अभितः उभयतः उभयपार्श्वयोः ततन्थ तन्तुभिर्विस्तारितवत्यः। तिङां तिङो भवन्तीति वक्तव्यमिति वचनात् प्रथमपुरुषबहुवचनस्थाने मध्यमैकवचनम्। तेनिथेति वक्तव्ये ततन्थेति रूपं बभूथाततन्थजगृम्भ-ववर्थेति निगम इति ( पा ७, २, ६४ ) निपातनात् सिद्धम्। या या आदिकर्त्र्यस्ताः सर्वा देव्यो द्योतमानाः स्तुत्या वा जरसा युक्ता वृद्धसुवासिन्यश्च ताः त्वा त्वां संव्ययन्तु परिधापयन्तु। यद्वा जरसा निमित्तेन जरापर्यन्तजीवनाय परिधापयन्त्वित्यर्थः। आयुष्मति बह्वायुष्योपेते कन्यके इदं वासो वस्त्रमाच्छादनयोग्यं परिधत्स्व परिधानं कुरु ॥५॥

**परिधत्त धत्त वाससैनां शतायुषीं कृणुत दीर्घमायुः ।**
**शतञ्च जीव शरदः सुवर्चा वसूनि चार्ये विभजासि जीवन् ॥६॥**

[ हि गृ १. ४. २—वाससैनं शतायुषं······चाय्यो विभजा स; आप म २, २, ५—चार्यो विभजासि ]

**त्रिष्टुबियम्। उत्तरीये विनियोगः। परिधापयितारो देवताः।**
**हे उपाध्यायादयः एनां कन्यां परिधत्त परिधापयत यूयम्। धत्त वाससा**

1 B प्रस्तुतं
2 A उत्तरीयं
3 The groups of deities (*devyaḥ*) taking part in the manufacture of garments are named in a Mantra in the *Āpastamba-mantrapāṭha* (2, 2, 3) as Revati, Kṛttikā, Dhī and Gnā.

वाससा चैनां प्रावारयत[1]। शतायुषीं बहुकालजीविनीं[2] कृणुत कुरुत आशीर्दानादिभिर्विवाहोपकरणैश्च। दीर्घमायुः बहुकालं यावदित्यर्थः[3]। एवं परिधापकानभिधायाधुना तामेवाह—हे कन्यके शतं च जीव शरदः शतं वर्षाणि जीव। किञ्च सुवर्चाः कान्तिमती असि। वसूनि धनानि च आर्ये विभृजासि भज। भज सेवायामित्यस्याकारस्य ऋकारापत्त्या लेटि शपि श्लौ द्विर्वचनेऽभ्यासस्य चेत्वे रूपम्। जीवन् जीवन्ती यावज्जीवं प्राणान् धारयन्तीत्यर्थः॥६॥

परिधत्तेत्यस्य विनियोगः पूर्वमन्त्र उक्तः। पाठस्तु परिधत्तेति।

त्रिष्टुबस्य छन्दः। वस्त्रपरिधापयित्र्यो देवताः। पूर्वमन्त्रे परोक्षेणोक्तम्। अत्र प्रत्यक्षेणोच्यते।

हे परिधापयित्र्यो देवता यूयम् एनां कन्यकां परिधत्त उपर्याच्छादनं कुरुत। आशीःपरैर्मन्त्रैराशास्य बह्वायुष्यां कुरुतेत्यर्थः। हे आर्ये अभिगन्तव्ये कन्यके सुवर्चाः शोभनरूपा शोभनाभरणा वा त्वं शरदः शतम्। शरदिति जात्यैकवचनम्। शरदुपलक्षितानां संवत्सराणां शतं च जीव। वक्ष्यमाणवस्वपेक्षया चशब्दः। किं च चिरकालं जीवन्ती वसूनि च धनान्यपि बिभृज। भज सेवायामित्यकारस्य ऋकारापत्त्या लेटि शपः श्लौ जश्त्वम्। बहुलं छन्दसीत्यभ्यासस्येत्वे (पा ७, ४, ७८) रूपम्। अथवा विभजतेरेव सोपसर्गस्य लोण्मध्यमे रूपम्। अकारस्याकारापत्तिर्लेटोऽडाटाविति (पा ३, ४, ९४)॥६॥

सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद‍ग्नये।
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्॥७॥

[ऋ स १०. ८५. ४१ (सोमो ददद्)]

अनुष्टुबस्य च्छन्दः। सोमो देवता। पत्युः कन्यानयनजपे विनियोगः। तथा च गृह्यकारः [गो गृ २.१.१८] अभ्युदानयन् जपेत् सोमोऽददत्।

स्वरूपमनूद्यते। इमां जातमात्रामेव सोमः अददत् दत्तवान् गन्धर्वाय आदित्याय। सोऽप्यग्नये दत्तवान्। अग्निरपि धनपुत्रसहितामिमां मह्यं दत्तवान्। अथो इति अपिशब्दार्थे॥७॥

सोमोऽदददित्येषा पत्युः कन्यानयनजपे विनियुक्ता। तथा च सूत्रम् (खा गृ १, ३, ६) आनीयमानायां पाणिग्राहो जपेत् सोमोऽददिति[4]।

1 B धारयत
2 D[1] चिरकालजीविनीं
3 D[1] adds आयुः कुरुत.
4 Cf. *Drāhy. Gṛ.* 1. 3. 6.

पाठस्तु सोमोऽददद्गन्धर्वायेति । अनुष्टुबस्य च्छन्दः । सोमादयो देवताः ।

अनेन वस्तुस्वरूपकथनम् । इमामिति प्रतिवाक्यं सम्बध्यते । इमां कन्यकां जातमात्रामादौ सोमो गन्धर्वाय आदित्याय अददत् आदित्याय दत्तवान् । गन्धर्व-शब्दस्यादित्यवाचकत्वं दिव्यो गन्धर्व इत्यत्रोक्तम्[1] । यद्वा प्रसिद्धो विश्वावस्वाख्यो गन्धर्वो ग्रहीतव्यः । 'विश्वावसुर्नाम गन्धर्वः कन्यानामधिपतिर्यतः' इत्यादिमन्त्रवर्णात्[2] । स च गन्धर्वोऽग्नयेऽददत । सोऽग्निः अथ अनन्तरं रयिं च पुत्रांश्च इमां कन्यकां च मे मह्यमदात् । धनपुत्राद्युपेतां कन्यकामदादित्यर्थः । अयमेवार्थः 'सोमः प्रथमो विविदे गन्धर्वो विविद उत्तर' इत्यादिषु[3] प्रसिद्धः ॥७॥

**पश्चादग्नेः संवेष्टितं कटमेवंजातीयं वाऽन्यत् पदा प्रवर्तयन्तीं तां पति-र्वाचयेत् [गो गृ २.१. १६ द्रः]**

प्र मे पति या नः पन्थाः कल्पताम् ।
शिवा अरिष्टा पतिलोकं गमेयम् ॥८॥

[गो गृ २. १. २० ; जै गृ १. २०]

**अस्य छन्दो द्विपाज्जगती पतिर्देवता पदप्रवर्तने विनियोगः ।**

**[4]नः अस्माकं पति पतिः मे मदर्थं पन्थाः पन्थानं प्रकल्पतां करोत्वित्यर्थः । पन्था इत्ययमो द्वितीयैकवचनस्य स्थाने सुपां सुपो भवन्तीति प्रथमैकवचनम् । या येन पथा अहं शिवा सुखावहा अरिष्टा अहिंसिता पतिलोकं पतिकुलं गमेयं गच्छामीत्यर्थः ॥८॥**

प्र मे पतियान इत्यस्य वधूजपे विनियोगः । तथा च सूत्रम्—प्र मे पतियान इति वधूर्जपेदिति[5] । पाठस्तु प्र म इति । एतस्योत्तरस्य च द्विपदा जगती च्छन्दः । मार्गो देवता ।

[4]पतियानः यात्यनेति यानो मार्गः । पतिर्येन मार्गेण याति स पतियानः । तादृशः पन्था मार्गो मह्यं कल्पतां संभवत्वित्यर्थः । मार्गप्रार्थनप्रयोजनमाह । अहं च तेन मार्गेण शिवा मङ्गला अशुभरहिता अरिष्टा—रुष रिष हिंसायाम्—अहिंसिता च सती । पतिलोकं लोक्यत इति लोकः प्रदेशः तं पतिनिवासप्रदेशं गमेयं प्राप्नुयाम् ॥८॥

1 See *ante*, p. 9.
2 This Mantra with an additional quarter verse has been cited by Sāyaṇa under *Ṛv*. 10. 85. 22.
3 *Ṛv*. 10.85, 40 etc.
4 The two *Bhāṣyas* differ in interpreting the expression *patiyānaḥ*.
5 See Rudraskanda on *Kh. Gṛ*. 1. 3. 6.

**स्वयं जपेज्जपन्त्यां प्रास्या [गो गृ २. १. २०] इत्यूहं कृत्वा पतिर्जपेत्।**

प्रास्याः पति या नः पन्थाः कल्पताम्।
शिवा अरिष्टा पतिलोकं गम्याः ॥९॥

[ गो गृ २. १. २१ ]

प्रास्या इति मन्त्रस्य पत्युर्जपे विनियोगः। प्रास्याः पतियान इति जपेत् पतिरिति सूत्रितत्वात्[1]। पाठस्तु प्रास्या इति। पूर्ववच्छन्दः।

गच्छन्तीयं कन्यका मद्देशं प्राप्नोत्विति शेषः ॥९॥

अग्निरेतु प्रथमो देवताभ्यः सोऽस्यै प्रजां मुञ्चतु[2] मृत्युपाशात्।
तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदात् स्वाहा॥१०

[गो गृ २. १. २४; खा गृ १. ३. ११। आ गृ १. १३. ६; पा गृ १. ५. ११;
आप म १. ४. ७—अग्निरैतु प्रथमो देवतानां]

**अस्य च्छन्दोऽतिजगती अग्निर्देवता। अग्निरित्यादीनां षण्णामाज्यहोमे विनियोगः।**

**अस्मिन् कर्मणि अग्निः एतु आगच्छतु। प्रथमः प्रधानभूतः। देवताभ्य इन्द्रादिभ्यः। आगत्य च सः अग्निः अस्यै अस्याः कन्यायाः प्रजां भाविनीं मुञ्चतु मोचयतु मृत्युपाशात्। तत् एतन्मृत्युपाशाद्विमोचनमग्निकृतम् अयं राजा वरुणः अनुमन्यताम् अनुजानातु। तथा च करोतु यथेयं स्त्री पौत्रं पुत्रसम्बन्धि अघं व्यसनं न रोदात् न रोदिष्यतीत्यर्थः ॥१०॥**

अग्निरेत्वित्यादीनां षण्णां मन्त्राणां विवाह आज्यहोमे विनियोगः। तथा च सूत्रम्—अग्निरेतु प्रथम इति षड्भिश्चेति [ खा गृ १, ३, ११ ]। चशब्दो महाव्याहृतिभिराज्यं जुहुयादिति [ खा गृ १, ३, ८ ] पूर्वसूत्रोक्तमहाव्याहृतिभिः सह समुच्चयार्थः। तत्र प्रथमोऽग्निरेत्विति। अस्य च्छन्दोऽतिजगती। अग्निर्देवता।

अग्निरङ्गनादिगुणयुक्तो देवो देवताभ्य इन्द्रादिभ्यः पूर्वं प्रथमः प्रतमः प्रकृष्टतमो मुख्यः सन्नेतु अस्मदीयं कर्मागच्छतु। प्रथम इति मुख्यनाम। प्रतमो भवतीति निरुक्तम् [२, २२]। यद्वा इतरदेवेभ्यः प्रथमभावी सन्नेतु। अग्नौ प्रथममागते सतीतरेषां हविर्वहत्व-सम्भवादादौ तस्यागमनं प्राथ्यर्ते। स प्रार्थ्यत आगतोऽग्निः। अस्यै षष्ठ्यर्थे चतुर्थी। अस्याः

1 See Rudraskanda on *Kh. Gṛ.* 1. 3. 6. 2 S मुञ्चातु

वध्वाः सम्बन्धिनीं प्रजां प्रकर्षेण पुत्रपौत्रादिरूपेण जायत इति प्रजा पुत्रादिका तां मृत्युपाशात् मृत्युः प्राणापहर्ता देवः तस्य पाशात् बन्धनप्रग्रहान्मुञ्चतु मोचयतु। तत् पाशमोचनं वरुणो राजा अनुमन्यताम् अङ्गीकरोतु। सर्वत्र बन्धनस्य वरुणाधीनत्वात्तन्मोचनार्थं वरुणानुमतिप्रार्थनमुक्तम्। यथा येन प्रकारेणेयं स्त्री वधूः पौत्रं पुत्रसम्बन्धिनम् अघं दुःखमरणादिलक्षणं मृत्युपाशकृतं दृष्ट्वा न रोदात् न रोदिष्यति तथा अनुमन्यतामिति समन्वयः ॥१०॥

## इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै जरदष्टिं कृणोतु। अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभि विबुध्यतामियं स्वाहा ॥११॥

[गो गृ २. १. २४ द्रः। जै गृ १. २०; पा गृ १. ५. ११; आप म १. ४. ८; हि गृ १. १६. ७—प्रजामस्यै नयतु दीर्घमायुः; प्रबुध्यतामियं ]

**अस्य च्छन्दोऽतिजगती। अग्निर्देवता।**

**इमां कन्याम् अग्निः गार्हपत्याख्यः अग्निहोत्रिणीं सतीं त्रायताम् पालयतु। अग्निहोत्रमस्या भवत्वित्याशास्यते। किञ्च प्रजाम् अस्यै अस्याः सम्बन्धिनीं जरदष्टिं जरायुक्तां जरामयीं चिरायुषीं कृणोतु करोतु स एवाग्निः। किञ्च अशून्योपस्था नित्यं भर्तृसङ्गता अस्तु भवतु। जीवताम् आयुष्मताम् इयं माता अस्तु। अस्यां जातान्यपत्यान्यकाले मा म्रियन्तामित्याशास्यते। अत इयं पौत्रं पुत्रसम्बन्धिनम् आनन्दं सुखम् अभिविबुध्यताम् आभिमुख्येन विविधमनुभवत्वित्यर्थः ॥११॥**

अथ द्वितीय इमामग्निरिति।

अस्य च्छन्दो जगती। इमां कन्यकां गार्हपत्यः—गृहपतिर्यजमानः नित्यं धार्यमाणत्वेन तत्सम्बन्धी गार्हपत्यः। यद्वा यजमानगृहस्य नित्यपालकोऽग्निर्गृहपतिः स एव गार्हपत्यः। स्वार्थिकस्तद्धितप्रत्ययो राक्षसवायसादिवत्। त्रायतां पालयतां स एवाग्निः। अस्यै अस्यां कन्यकायां प्रजां पुत्रादिलक्षणां जरदष्टिं जरन्ती अष्टिः अशनं व्याप्तिर्वा यस्याः सा तथोक्ता तां जरापर्यन्तं जीवन्तीमश्नन्तीं वा सतीमित्यर्थः। कृणोतु। किं चैषा अशून्योपस्था सर्वदा पतिनोपेतगुह्येन्द्रिया यद्वा काले काले प्रसवसहितोपस्था सती जीवतां जीवतु। किं च माता अस्तु पुत्रोत्पादयित्री भवतु। तदेवाह—इयं कन्यका पौत्रसम्बन्धिनमानन्दमभिविबुध्यताम् अनुभवत्वित्यर्थः ॥११॥

द्यौस्ते पृष्ठं रक्षतु वायुरूरू अश्विनौ च स्तनन्धयांस्ते पुत्रान् सविता-
ऽभिरक्षतु ।
आ वाससः परिधानाद् बृहस्पतिर्विश्वे देवा अभिरक्षन्तु पश्चात
स्वाहा ॥१२॥

[गो गृ २. १. २४ द्रः ; जै गृ १. २०—स्तनन्धयतस्ते ; हि गृ १. १६. ७ ;
आप म १. ४. १०—स्तनं धयन्तं सविता]

अस्य च्छन्दः शक्करी । वैश्वदेवीयं कन्याया आशीर्वादपरा ।

हे कन्ये ते तव पृष्ठं पश्चाद्भागं द्यौः दिव्याख्यो लोको रक्षतु । वायुः अश्विनौ च तव ऊरू रक्षन्तु । किञ्च स्तनन्धयान् स्तन्याहारान् ते तव पुत्रान् सविता आदित्यः अभिरक्षतु आभिमुख्येन रक्षतु । आ वाससः परिधानात् । आङ् मर्यादायाम् । वासःपरिधानयोग्या यावत् सम्पण्णा इत्यर्थः । तस्मादुपरिकालात् पश्चात् बृहस्पतिः विश्वे देवाश्च अभिरक्षन्तु ॥१२॥

अथ तृतीयो द्यौस्त इति । अस्य शक्करी च्छन्दः । द्युप्रभृतयो देवताः ।

हे कन्यके पृष्ठं स्पर्शनयोग्यमुन्नतं बहिर्भागं द्यौर्द्युलोकाभिमानी देवो रक्षतु । तथा तवोरू वायुः रक्षतु । तथा ते तव स्तनन्धयान् स्तनपायिनः पुत्रानश्विनौ देवौ रक्षताम् । किं च यः सविता प्रेरक आदित्योऽस्ति स एव ते पुत्रान् निवृत्तस्तन्यपानान् सञ्चारसमर्थान् रक्षतु । रक्षणीयकालस्यावधिमाह । आ वाससः परिधानात् स्वपुत्राणां यावद्वासःपरिधानं तावत्पर्यन्तमन्तरावकाशे हिताहितपरिज्ञानपर्यन्तमित्यर्थः । पश्चात्तदनन्तरं बृहस्पति-र्विश्वे देवा अभिरक्षन्तु आभिमुख्येन पालयन्तु ॥१२॥

मा ते गृहेषु निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु ।
मा त्वं रुदत्युर आ वधिष्ठा जीवपत्नी पतिलोके विराज
पश्यन्ती प्रजां सुमनस्यमानाम् स्वाहा ॥१३॥

[ गो गृ २. १. २४ द्रः ; जै गृ १. २० ; आप म १. ४. ६ ;
हि गृ १. १६. ७—मा ते गृहे, मा त्वं विकेश्युर आ ]

अस्य च्छन्दोऽतिजगती । अग्न्यादय एव देवताः ।

हे कन्यके ते तव गृहेषु निवासेषु निशि रात्रौ घोषः आक्रन्दरूपः शब्दो मा उत्थात् मा उत्तिष्ठतु मा भवत्वित्यर्थः । किञ्च त्वत् अन्यत्र त्वां वर्जयित्वा

रुदत्यः स्त्रियः संविशन्तु प्रविशन्तु[1] [2]त्वदीयेषु शत्रुगृहेषु[2]। मा त्वदीयगृह इत्यर्थः। किञ्च त्वं रुदती दुःखार्ता सती उरः हृदयं मा आवधिष्ठाः मा त्वमुरोघातं रोदिष्यसीत्यर्थः। किञ्च जीवपत्नी जीवत्पतिका सती त्वं पतिलोके पतिगृहे विराज शोभस्व त्वं विविधान् भोगान् प्राप्नुहि। किं कुर्वाणा—प्रजां सुमनस्यमानां हृष्टचित्तां पश्यन्ती वीक्षमाणा[3] ॥१३॥

अथ चतुर्थी मा ते गृहेष्विति। अतिजगतीयम्। अग्न्यादयो देवताः।

हे कन्यके ते तव गृहेषु शयनभोजनादिनिवासेषु निशि अहनि च घोषो रुदतीनां योषितां शोकशब्दो मा उत्थात् मोदेत् मा जायतामित्यर्थः। स कुत्र वर्ततामिति चेत्। त्वत् त्वत्तोऽन्यत्र त्वद्द्वेषिणां गृहे रुदत्यः स्त्रियः संविशन्तु। त्वद्गृहेषु रोदनघोषः कदाचिदपि मा भवत्वित्यर्थः। सखीनां रोदनमाशास्य कन्यकाया अरोदनमाशास्ते। हे कन्यके त्वमपि रुदती पुत्रादिविरहनिमित्तं शोकं कुर्वती उरो मा वधिष्ठाः वक्षस्ताडनं मा कार्षीः। किन्तु जीवपत्नी जीवपतिका सती पतिलोके पत्युः समीपे देशे विराज शोभस्व। किं कुर्वती—प्रजां पुत्रादिकां सुमनस्यमानां सुमना इवाचरन्ती सुमनस्यमाना तादृशीं पश्यन्ती पुत्रादिसौमनस्यं विलोकयन्तीत्यर्थः। एतत् सर्वमग्न्यादीनामनुग्रहाद्भवत्वित्यभिप्रायस्तेषां प्रकृतत्वात् ॥१३॥

अप्रजस्यं पौत्रमर्त्यं पाप्मानमुत वा अघम्।
शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशम्
स्वाहा ॥१४॥

[ गो गृ २. १. २४ ; खा गृ १. ३. ११ द्रः। जै गृ १. २० ;
आप म १. ४. ११ ; हि गृ १. १६. ७—अप्रजस्तां पौत्रमृत्युं ]

उपरिष्टाद्बृहतीयम्। प्रकरणसमर्पिता अग्न्यादय एव देवताः।

हे कन्यके अप्रजस्यं त्वदीयं बन्ध्यत्वं पौत्रमर्त्यं पुत्रमरणं पाप्मानं त्वदीयमेव मृत्युम् उत वै[4] अघम् अन्यदपि त्वदीयमरिष्टम् एतत् सर्वं त्वत्तोऽपकृष्य। कथम्—शीर्ष्णः मस्तकात् स्रजमिव उन्मुच्य मालामिवावतार्य। द्विषद्भ्यः शत्रुषु प्रतिमुञ्चामि प्रतिक्षिपामि पाशं मृत्युपाशरूपमित्यर्थः ॥१४॥

1 B[1], M प्रतिगच्छन्तु
2 B[1], M स्वकीयेषु गृहेषु सन्तु
3 B[1], M रममाणा
4 See Sāyaṇa: उत वा.

अथ पञ्चममाहाऽप्रजस्यमिति ।

हे कन्यके तव सम्बन्धिनः अप्रजस्यं प्रजाया अहितं पुत्रोत्पत्तिप्रतिबन्धिनं पौत्रमर्त्यं पुत्रमरणसम्बन्धिनं पाप्मानम् । उत वा अथवा अघम् अन्यच्छरीरादिपीडादुःखं च । पाशम् उक्तमप्रजस्यादिलक्षणं शीर्ष्णः शिरसः सकाशात् स्रजमिव गतगन्धमाल्यमिव उन्मुच्य तद्यथा परिहरन्ति तद्वदुत्सृज्य । द्विषद्भ्यः द्वेषिभ्यः प्रतिमुञ्चामि द्विषत्सु पाशं स्थापयामीत्यर्थः ॥१४॥

परैतु मृत्युरमृतं म आगाद् वैवस्वतो नो अभयं कृणोतु ।
परं मृत्यो अनु परेहि पन्थां यत्र नो अन्य इतरो देवयानात् ॥
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान्
स्वाहा ॥१५॥

[गो गृ २. १. २४ द्रः । अ स १८. ३. ६२ द्रः—अमृतं न ऐतु ; शा श्रौ ४. १६. ५. द्रः ]

अत्यष्टिरियं वैवस्वतदेवता वैवस्वतीयहोमे विनियुक्ता ।

कन्यकाऽऽयुष्यमाशास्ते—मत्तो मृत्युः परैतु पराङ्मुखो गच्छतु । मृत्योर्माऽहं म्रियेयेत्यर्थः । किञ्च अमृतम् अमरणधर्मत्वं मे मम आगात् आगच्छतु । तथा वैवस्वतः यमः नः अस्माकम् अभयं कृणोतु करोतु । इदानीं प्रत्यक्षीकृत्य मृत्युरेव प्रार्थ्यते । हे मृत्यो परम् अन्यम् अनु[1] पन्थां पन्थानं प्रति परेहि मत्तः पराङ्मुखो गच्छेत्यर्थः । यत्र नः अस्मत्पथात् अन्यः तद्व्यतिरिक्तः[2] पन्थाः इतरो देवयानात् देवपथादन्यः पितृयाणमित्यर्थः । किञ्च चक्षुष्मते पश्यतः शृण्वते शृण्वतः प्रत्यक्षस्यैव ते तवैतदहं ब्रवीमि प्रार्थये । स च त्वं प्रार्थितः सन् मा नः प्रजां रीरिषः । रुष रिष हिंसायाम् । अस्मदीयां प्रजां पुत्रपौत्रादिकान् मा हिंसीः । मोत वीरान् । उत अप्यर्थे । अस्मदीयान् वीरान् विक्रान्तानपि पुरुषान् मा हिंसीरित्यर्थः । स्वाहेति हविरभिधानम् ।

[3]इति भट्ट-गुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये प्रथमप्रपाठके[3]

प्रथमः खण्डः ॥

1 I adds येन.

2 B अप्यतिरिक्तः

3 B[1] इत्युपनिषत्प्रथमपर्वणि ; M इत्युपनिषन्मन्त्रप्रथमपर्वणि

अथ षष्ठः परैतु मृत्युरिति । अस्यात्यष्टिश्छन्दः । वैवस्वतो देवता ।

मृत्युस्तन्नामको देवः परैतु परागच्छतु । अमृतम् अमरणमविनाशं मे मम आगात् आगच्छतु । वैवस्वतोऽस्माकमभयं भयराहित्यं क्षेमं कृणोतु करोतु । अथ प्रत्यक्षवदाह— हे मृत्यो देव परमुत्कृष्टं पन्थां पन्थानम् अनुपरेहि अनुक्रमेण परागच्छ अपसर । यद्वा परं दूरदेशं परेहि पराङ्मुखो गच्छ । गन्तव्यप्रदेशं विशिनष्टि—यत्र यस्माद्देवयानाद्देवगमनान्नोऽस्माकमन्य इतरस्तद्विपरीतलक्षणः पितृयाणमार्गोऽस्ति तं परेहि । अन्येतरयोः परस्परव्याख्यानव्याख्येयभावः । किं च चक्षुष्मते विशेषदर्शनवते सम्यग्द्रष्ट्रे इत्यर्थः । शृण्वते अस्मदीयं प्रार्थनावचनं सम्यक् शृण्वते ते तुभ्यं ब्रवीमि । किमिति चेदुच्यते । नोऽस्माकं प्रजां पुत्रादिकां मा रीरिषः हिंसां मा कृथाः । उत वीरान् भृत्यादींश्च मा रीरिषः ॥१५॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणमन्त्रपर्वणि
प्रथमः खण्डः ॥*॥

इममश्मानमारोहाश्मेव त्वं स्थिरा भव।
द्विषन्तमप बाधस्व मा च त्वं द्विषतामधः ॥१॥

[ गो गृ २. २. ४ ; खा गृ १. ३. १६ ; जै गृ १. १२—
मा च त्वा द्विषतो वधीत् ; आ गृ १. ७. ७ द्रः ]

**अनुष्टुबियमश्मदेवताकाऽऽशीर्वादपराऽश्मक्रमणे विनियुक्ता।**

**हे कन्यके इमं प्रत्यक्षम् अश्मानं दृषत्पुत्रम् आरोह आक्राम। अश्मेव पाषाण इव। इवेत्युपमार्थे। स्थिरा दृढा भव। किञ्च द्विषन्तम् अमित्रम् अपबाधस्व पीडय। हे वधु द्विषतां शत्रूणाम् अधः अधरभावेन मा च भूः। मा प्रतिषेधे। चकारोऽवधारणे। [1]मैव वर्तिष्ठा[1] इत्यर्थः ॥१॥**

इममश्मानमित्येषा वध्वा अश्माक्रमणे विनियुक्ता। तथा च सूत्रम् [ खा गृ १, ३, १६ ] पश्चादग्नेर्दृषत्पुत्रमाक्रमयेद्वधूं दक्षिणेन प्रपदेनेममश्मानमिति।

पाठस्तु—इममश्मानमारोहेति।

हे कन्यके त्वमिमं पुरोवर्तिनमश्मानं दृषत्पुत्रमारोह आक्रमस्व आक्रम्य चाश्मेव त्वं स्थिरा भव। किं च द्विषन्तं द्वेष्टारं वैरिणम् अपबाधस्व कुत्सितं पीडां कुरुष्व। किं च द्विषतां द्वेषं कुर्वतामधः अधोभावं न्यग्भावं मा त्वम्। प्राप्नुहीति शेषः ॥१॥

इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती।
दीर्घायुरस्तु मे पतिः शतं वर्षाणि जीवतु।
एधन्तां ज्ञातयो मम स्वाहा ॥२॥

[गो गृ २. २. ६ ; खा गृ १. ३. २२ ; जै गृ १. २१। पा गृ १. ६. २ ; अ स १४. २. ६३ ; शा गृ १. १४. १ ; आप म १. ५. २ ; हि गृ १. २०. ४ ; मा गृ ११. ११. २२ द्रः]

**उपरिष्टाज्ज्योतिष्मतीयमग्निदेवताकाऽऽशीर्वादपरा लाजहोमे विनियुक्ता। लाजा भृष्टा व्रीहयः[2]।**

1 B[1], M मा वर्तिष्ठा

2 M व्रीहियवाः

**पतिर्जपेत्। इयं नारी स्त्री उपब्रूते मत्समीपे ब्रूते अग्नौ लाजान् आवपन्ती प्रक्षिपन्ती। किं ब्रूते—दीर्घायुरस्तु मे पतिः। किञ्च शतं वर्षाणि वर्षाणां शतं जीवतु। किञ्च एधन्तां ज्ञातयो मम। एध वृद्धौ। मदीयाः स्वजना वर्धन्ताम्। स्वाहेत्युक्तार्थम् ॥२॥**

इयं नारीत्येषा लाजाहोमे विनियुक्ता। तथा च सूत्रम् [ खा गृ १. ३. २२ ]—तं साऽग्नौ जुहुयादविच्छिन्दत्यञ्जलिमियं नारीति ॥ तमिति भ्रात्रादिना पूरितं लाजाञ्जलिमित्यर्थः। प्रकृतत्वादेव सेति सिद्धेः पुनः सेति वचनं सा केवलं जुहुयादेव। मन्त्रं तु पतिः पठेदित्यर्थः।

पाठस्तु—इयं नार्युपब्रूत इति। उपरिष्टाज्ज्योतिस्त्रिष्टुबस्य च्छन्दः। अग्निर्देवता आशासनाया अग्निविषयत्वात्।

इयं नारी कन्यका उपब्रूते अग्निमुपेत्य प्रार्थयते। किं कुर्वती—अग्नौ प्रवृद्धे लाजानावपन्ती लाजापूरितमञ्जलिं मुञ्चन्ती। किं ब्रूत इति चेदुच्यते। मे मम पतिः पालको भर्ता दीर्घायुरस्तु चिरजीवनो भवतु। आयुष्यावधिमाह—शतं वर्षाणि वर्षशतपर्यन्तं जीवतु। किञ्च मम ज्ञातयः—ज्ञातिशब्दो बन्धुवचनः—बन्धवश्च एधन्ताम्।

बह्वृचानां तु नेयं नारीति मन्त्रोऽस्ति। तेषां तु वरुणं न्विति विशेषः[1] ।२॥

**अर्यमणं नु देवं कन्या अग्निमयक्षत।**
**स इमां देवो अर्यमा प्रेतो मुञ्चातु माऽमुतः स्वाहा ॥३॥**

[ पा गृ १. ६. २—अर्यमणं देवं ; आ गृ १. ७. १३—नामुतः ; शा गृ १. १८. ६—सेमां देवो ; जै गृ १. २१—अर्यमणं नु, कन्याग्निं। मा गृ १. ११. १२—सोऽस्मान् देवोऽर्यमा। गो गृ २. २. ७ ; खा गृ १. ३. २३ द्रः। आप म १. ५. ७ द्रः ]

1 In dealing with *Lājahoma*, one of the *Gṛhyasūtras* of the Bahvṛcas (*Āśv. Gṛ.* 1. 7. 13) prescribes the Mantra वरुणं नु देवम् instead of इयं नार्युपब्रूते. The fact is noted here by Sāyaṇa. The other *Sūtra* of the Bahvṛcas ( *Śāṅkh. Gṛ.* 1. 14. 1 ) however does not exclude इयं नार्युपब्रूते. But the author of the *Sūtra* in this particular instance is considered by H. Oldenberg to have depended on some other Gṛhya text. See SBE, vol. xxix: *Gṛhyasūtras*, part I, p. 37.

उपरिष्टाद्बृहतीयमर्यमदेवताका लाजहोमे विनियुक्ता।

**स्वरूपमनूद्यते। कन्याः पूर्वाः अर्यमणं देवमग्निं च। नुश्चार्थे। अयक्षत इष्टवत्यः। पूर्वार्धेन सामान्योपक्रम उत्तरार्धेन विशेषोपसंहारः। स चार्यमा देवोऽग्निश्चेष्टः सन् इमां कन्यकां परिणीयमानाम् इतः पितृकुलात् प्रमुञ्चातु प्रमुञ्चतु। छान्दसमत्र दीर्घत्वम्। मा अमुतः पतिकुलादिति। स्वाहेति गतार्थम् ॥३॥**

अर्यमणं पूषणमित्येतावपि मन्त्रौ प्रधानभूतौ लाजाहोमे विनियुक्तौ—अर्यमणं पूषणमित्युत्तरयोरिति [ खा गृ १. ३. २३ ]। उत्तरयोर्लाजाहोमयोरिमौ मन्त्रौ भवत इत्यर्थः।

तत्र प्रथममन्त्रमाहार्यमणं न्विति। उपरिष्टाद्बृहती च्छन्दः। अर्यमा देवता।

अर्यमणं नु। नुश्चार्थे। स चार्यमाऽग्न्युपेतः। अरीनसुरान् यमयतीत्यर्यमा आदित्यः[1]। अथवाऽर्तेरर्यमशब्दः। अथवार्यमेयर्ति गच्छतीत्यर्थः। तन्नामानं देवम् अग्निं च। कन्याः कमनीयाः। 'कनीनके कन्यके। कन्या कमनीया भवति। क्वेयं नेतव्येति वा' इति निरुक्तम् [४. १८]। विवाहकाले अयक्षत अयजन्त। न्विति निपातो हिशब्दार्थे प्रसिद्ध उच्चावचेष्वर्थेषु निपतन्तीति[2] निपातशब्दव्युत्पत्तेः। अथवाऽनर्थकोऽयम्। अनर्थका निपाता इति वचनात्। अर्यमरूपमग्निं कन्या अयक्षतेत्यर्थः। अग्निमयक्षतेत्यग्नेरेव यागसम्बन्धात्। यद्वा अग्निशब्दो यौगिको द्रष्टव्यः। अङ्गनादिगुणकमर्यमणमयक्षतेत्यर्थो देवशब्दसम्बन्धात्। अत इयमपि कन्या यजतीत्यर्थः। स इष्टोऽर्यमा देव इमां कन्यकाम् इतः पितृकुलात् प्रमुञ्चातु प्रमुञ्चत्वस्मत्कुलप्राप्तये। मा अमुतः अस्मत्कुलसकाशान्न मोचयतु पितृकुलाय। अग्निविशेषणपक्षे अर्यमाऽग्निर्देव इतः स्वसकाशात् इमां कन्यां प्रमुञ्चतु माऽमुतः 'तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः' 'अग्निर्मह्यमथो इमाम्' इत्यादिमन्त्रवर्णात्[3] ॥३॥

**पूषणं नु देवं कन्या अग्निमयक्षत।**
**स इमां देवः पूषा प्रेतो मुञ्चातु माऽमुतः स्वाहा ॥४॥**

[ गो गृ २. २. ७ ; खा गृ १. ३. २३ द्रः। आ गृ १. ७. १३ ; शा गृ १. १८. ८ ; मा गृ १. ११. १३ द्रः ]

1 See *T. S.* 2.3.4.1 : असौ वा आदित्योऽर्यमा. Cf. Sāyaṇa's comm. on *Ṛv.* 1. 89. 3 : अरीन् मन्देहादीनसुरान् यच्छति नियच्छतीत्यर्यमा, and on *T. Br.* 1. 1. 2. 4: अरीन् यमयति धनदानेन वशीकरोतीत्यर्यमा.

2 *Nir.* I. 4

3 *Ṛv.* 10. 85. 40 and 41

**पूषा देवता। सर्वं पूर्वेण समानम् ॥४॥**

अथ तृतीयमन्त्रमाह पूषणं न्विति। अस्य पूषा देवता। सर्वं पूर्वमन्त्रवद् व्याख्येयम्। तत्रायंमाऽत्र च पूषेति विशेषः। पूषा पोषको देव आदित्यमूर्तिविशेषः ॥४॥

कन्यला पितृभ्यः पतिलोकं यतीयमप दीक्षामयष्ट।
कन्या उत त्वया वयं धारा उदन्या इवाति गाहेमहि द्विषः ॥५॥

[ आप म १. ४. ४—पितृभ्यो यती पतिलोकमव दीक्षामदास्थ; गो गृ २. २. ८; खा गृ १. ३. २४ द्र:। जै गृ १. २१—यतीयमव ]

**त्रिष्टुबियं लाजहोमे विनियुक्तेष्टप्रार्थनपरा[1]।**

**कन्यला कन्यका इयं पितृभ्यः पितृगृहात् पतिलोकं पतिगृहं यती गच्छन्ती अप दीक्षाम् दीक्षां वर्जयित्वा। अपेति वर्जनार्थः। अयष्ट इष्टवती। दीक्षाशब्देन वैवाहिकं व्रतमुच्यते—त्रिरात्रमक्षारलवणाशिनावित्यादि[2]। तद्वर्जनं कृतवतीत्यर्थः। किञ्च कन्यां वदति पतिः—[3]कन्या हे कन्ये उत अपि च त्वया सहभूता वयम् द्विषः शत्रून् अतिगाहेमहि अभिभवेम। धारा उदन्या इव [3]यथा जलधाराः कर्त्र्यः उदन्याः पिपासाः कर्मभूता अतिगाहन्ते[3] तिरस्कुर्वन्तीति यावत्। [4]कन्येति छान्दसत्वात् सम्बुद्धावेत्वं न स्यात्[4] ॥५॥**

कन्यलेत्यग्निप्रणयने विनियुक्तः। सूत्रितं च [ खा गृ १. ३. २४ ]—हुते तेनैव गत्वा प्रदक्षिणमग्निं परिणयेत् कन्यला पितृभ्य इति ॥ इयं नारीति हुते येनैव प्रकारेण दक्षिणतो गतस्तेनैव प्रकारेण पाणिं गृह्णन्ननुपृष्ठमुत्तरतो गत्वा पाणिं गृह्णन्नेवाग्निं प्रदक्षिणीकुर्वीत येन वधूमनुगमयेदित्यर्थः[5]।

पाठस्तु कन्यला पितृभ्यइति। त्रिष्टुबियम्। उच्यमानोऽग्निर्देवता।

1 B[1], M add कन्यैव देवता.
2 B[1], M ०मक्षारलवणाधःशयनादि; See *Go. Gṛ.* 2. 3. 15.
3 From here B[1] and M begin to differ from A and B, giving henceforth the *Bhāṣya* of Sāyaṇa.
4 Only in D[1].
5 See Rudraskanda on *Kh. Gṛ.* 1. 3. 24.

इयं कन्यला कन्यका पितृभ्यः—मात्राद्यपेक्षया बहुवचनम्—पित्रादिभ्यः सकाशात् स्वलोकात् पतिलोकं पतिसमीपदेशं यतो गच्छन्ती दीक्षां विरात्तं [1]क्षारलवणे दुग्धमित्याद्युक्तप्रकारमेवायष्ट। अपेति वर्जनार्थः। दीक्षामत्यजदित्यर्थः। तथा कृतवती कन्या। उत अपि च वयं भर्त्राद्याश्च उदन्या धारा इव ता यथा पांसूनतिक्रम्यावगाहन्ते तद्वद् द्विषो द्वेष्टॄनतिगाहेमहि अभिभवेम ॥५॥

एकमिषे विष्णुस्त्वा नयतु ॥
द्वे ऊर्जे विष्णुस्त्वा नयतु ॥
त्रीणि व्रताय विष्णुस्त्वा नयतु ॥
चत्वारि मायोभवाय विष्णुस्त्वा नयतु ॥
पञ्च पशुभ्यो विष्णुस्त्वा नयतु ॥
षड् रायस्पोषाय विष्णुस्त्वा नयतु ॥
सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वा नयतु ॥६-१२॥

[ गो गृ २. २. ११ ; खा गृ १. ३. २६ द्र: । जै गृ १. २१ द्र: । पा गृ १. ८. १ द्र: ; आप म १. ३. ७ द्र: ]

**एकपदाः सप्त ता विराजो वैष्णव्यः पादाक्रमणे विनियुक्ताः।**
**हे कन्ये एकं पदं त्वा त्वां विष्णुः नयतु क्रामयतु इषे अन्नलाभाय ॥**
**द्वे ऊर्जे बललाभाय ॥**
**त्रीणि व्रताय यज्ञकर्मणे ॥**
**चत्वारि मायोभवाय सौख्यप्राप्तये ॥**
**षट् रायस्पोषाय धनपुष्ट्यै।**
**सप्त सप्तभ्यो होत्राभ्यः ऋत्विक्प्राप्तये ॥६-१२॥**

एकमिष इत्यादिसप्तमन्त्राणां सप्तानां पदानामाक्रमणे विनियोगः। तथा च सूत्रम् [ खा गृ १. ३. २६ ]—शूर्पेण शिष्टानग्नावोप्य प्रागुदीचीमुत्क्रमयेदेकमिष इति ॥ अत्रोत्क्रमयेदिति सामान्येनोक्तेऽपि मन्त्रलिङ्गादुक्तार्थोऽवगम्यते। सर्वेषां विष्णुर्देवता। अनियतवर्णत्वेन प्रश्लिष्टपाठाद् यजूंष्येतानि। अतो न च्छन्दःक्लृप्तिः।

1 See *Kh. Gṛ.* 1. 4. 9: विरात्तं क्षारलवणे दुग्धमिति वर्जयानौ etc.

तत्र प्रथममन्त्रमाह—एकमिष इति ।

यत आदौ विष्णुस्त्रिषु लोकेषु त्रेधा पदं निदधे अत एष्वपि पदाक्रमणाय विष्णु-प्रार्थनं युक्तम् । हे कन्यके त्वामेकं पदं विष्णुर्व्यापको देव इषेऽन्नाय तत्समृद्धये नयतु प्रापयतु ॥६॥

अथ द्वितीयमन्त्रमाह—द्वे ऊर्जे इति ।

विष्णुः ऊर्जे बलाय त्वा त्वां द्वे पदे नयतु क्रमयतु ॥७॥

अथ तृतीयमाह—त्रीणि व्रतायेति ।

विष्णुस्त्वां व्रताय—व्रतमिति कर्म नाम—लौकिकवैदिकविषयाय कर्मणे त्रीणि पदानि नयतु ॥८॥

अथ चतुर्थमाह—चत्वारि मायोभवायेति ।

मय इति सुखनाम मयः स्युग्म्यमिति सुखनामसु पाठात्[1] । सौख्यप्राप्तये त्वां विष्णुश्चत्वारि पदानि नयतु ॥९॥

अथ पञ्चममाह—पञ्च पशुभ्य इति ।

पशुभ्यो वित्तभूतेभ्यो विष्णुस्त्वां पञ्च पदानि नयतु । शाखान्तरे पञ्चपदप्रापणं प्रजार्थं प्रजाभ्यः पञ्चपदीति[2] ॥१०॥

अथ षष्ठमाह—षड् रायस्पोषायेति ।

रायस्पोषाय रायस्पोषो गवादिधनपुष्टिस्तदर्थम् । षट् पदानि त्वां विष्णुर्नयतु । आश्वलायनगृह्ये [ १. ७. १९ ] तु 'रायस्पोषाय त्रिपदी'त्युक्तम्[3] । तत्र ऋतुभ्यः षट्पदीति षड्तूपलक्षितचिरकालजीवनाय ॥११॥

अथ सप्तममाह—सप्त सप्तभ्य इति ।

विष्णुर्देवस्तानि सप्त पदानि त्वा त्वां सप्तभ्यो होत्राभ्यो निमित्तभूताभ्यः सप्तहोत्रक-साध्यसोमयागसम्पत्तये नयतु । ते होता मैत्रावरुणो ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्रो ऽच्छावाकश्चेति सप्त होत्राः ॥१२॥

1 *Nigh*. 3. 6. 7
2 *Āśv. Gṛ*. 1. 7. 19
3 *Śāṅkh. Gṛ* 1. 14. 6 has also रायस्पोषाय त्रिपदी, while *Jai. Gṛ*. 1. 21 and *Pā. Gṛ*. 1. 8. 1 have त्रीणि रायस्पोषाय.

सखा[1] सप्तपदी भव सख्यं ते गमेयम् ।
सख्यं ते मा योषाः सख्यं ते मायोष्ठ्याः[2] ॥१३॥

[ गो गृ २. २. १६ ; खा गृ १. ३. ३१ द्रः । तै ब्रा ३. ७. ७. १२ ; आप म १. ३. १४—सप्तपदा भव, सख्यात्ते मा योषम्, सख्यान्मे मा योष्ठाः ]

**सामिकी पङ्क्तिरियं पादाक्रमणानन्तरमाशासने विनियुक्ता। आशास्यमाना देवता।**

**पतिः कन्यां प्रार्थयते। हे कन्यके त्वं मम सखा सखी समानख्याना सहाधिकारिणी भव। सप्तपदी [3]सप्तपदाक्रान्ताभिधेयेष्वर्थेषु[3]। विष्णोः प्रसादात् सख्यं ते गमेयम्। सख्यं मैत्री। तवाहं सखा भवामीत्याशास्ते। सख्यं ते मा योषाः मया सह तव सख्यमन्याः स्त्रियो मा विच्छिन्दन्त्वित्यर्थः। किञ्च सख्यं ते मायोष्ठ्याः मायः सुखं तस्योत्थानं मायोष्ठं तत्र भवा मायोष्ठ्याः सुखकारिण्यः स्त्रियो याः। तास्त्वया सह मम सख्यं कुर्वन्त्वित्यर्थः[4] ॥१३॥**

सखी सप्तपदीत्येष वध्वा वीक्षणार्थे जपे विनियुक्ता। सखी सप्तपदीति वधूमीक्षमाणो जपेदिति हि सूत्रितम्[5] ।

पाठस्तु सखी सप्तपदीति। सामिकी पङ्क्तिरियम्। आशासनीया कन्यका देवता।

हे कन्यके त्वं सखी समानाख्याना कर्मण्यस्मिन् समानाधिकारिणी समानसामर्थ्या वा सती सप्तपदी सप्तपदान्याक्रान्तान्यस्याः सन्तीति सप्तपदी तादृशी भव। यद्वा सप्तपदीत्वादस्मत्सखी भव सप्तपदानुगमनं कुर्वित्यर्थः। साप्तपदीनं सख्यमिति हि पाणिनीयं सूत्रम् [५. २. २२]। अहमपि ते सख्यं गमेयं तव समानख्यानं प्राप्नोमि। किं च प्राप्तं ते सख्यं मा योषाः। यु मिश्रणामिश्रणयोरिति[6]। मा योष्ठा इत्यस्य स्थाने मा योषा इति

1 Sāyaṇa, following Rudraskanda (*Kh. Gṛ.* 1. 3. 26), reads सखी.

2 Guṇ alone adopts this reading.

3 A, I सप्तपदाक्रान्तेष्वर्थेषु.

4 Guṇaviṣṇu differs from Sāyaṇa, both in reading and explanation.

5 The injunction occurs in Rudraskanda's commentary on *Kh. Gṛ.* 1.3.26.

6 But योष्ठाः is possible from युञ् बन्धने (*Dhātupāṭha, kryādi* 7).

च्छान्दसः। तत्रापि व्यत्ययेनोत्तमस्य स्थाने मध्यमः। तव सख्याद्वियुक्तो मा भूवमित्यर्थः। आपस्तम्बस्तु सख्यात्ते मा योषमिति पठति[1]। किं च ते त्वमित्यर्थः। त्वमपि सख्यं मदीयं मा योष्ठाः[2]। मम सख्यात्मा वियुक्ता भूः ॥१३॥

सुमङ्गलीरियं वधूरिमां समेत पश्यत।
सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन ॥१४॥

[ गो गृ २. २. १४ द्र: ; जै गृ १. २१ ; ऋ स १०. ८५. ३३ ; अ स १४. २. २८ ; आ गृ १. ८. ७ ; आप म १. ६. ५ ]

**अनुष्टुबियं विवाहेक्षकजनप्रतिमन्त्रणे विनियुक्ताशीर्वादपराशास्यमानदैवता।**

**हे ईक्षकाः सुमङ्गलीः प्रशस्तमङ्गला इयं वधूः परिणीता यतः अतः यूयम् एनां समेत संगच्छत पश्यत च आलोकयत। किञ्च सौभाग्यम् सुभगत्वम् अस्यै दत्त्वाय दत्त्वा अथ अनन्तरम् अस्तं गृहं विपरेतन यूयं गच्छतेत्यर्थः ॥१४॥**

सुमङ्गलीरित्येषा वधूदर्शनार्थमागतानां योषितां दर्शने विनियुक्ता। तथा चोक्तम्—वधुं द्रष्टुमागताः सुमङ्गलीः स्त्रियो वीक्षमाणः सुमङ्गलीरिति जपेत्[3]।

पाठस्तु सुमङ्गलीरियमिति। अनुष्टुबियम्। द्रष्ट्र्यो योषितो देवताः।

हे द्रष्टृयोषितः सुमङ्गलीः शोभनमङ्गलवतीः युष्मानियं वधूः पश्यति अत इमां समेत सङ्गता भवत। सङ्गत्यैताः पश्यत। दृष्ट्वा च सौभाग्यं सुभगत्वम् अस्यै वध्वै दत्त्वाय दत्त्वा। अथ अनन्तरम्। अस्तं—गृहनामैतत्—स्वगृहं विविधं परेतन परेत गच्छत। तप्तनबिस्रादिना [पा ७. १. ४५] तनादेशः। अस्ति होमानन्तरं वधूवरयोरवसेकः—अपरेणाग्निमौदको गत्वा पाणिग्राहं मूर्धन्यवसिञ्चेद्वधूं चेति सूत्रितत्वात् [खा गृ १. ४. २८-२९] ॥१४॥

समञ्जन्तु विश्वे देवाः समापो हृदयानि नौ।
सं मातरिश्वा सं धाता समु देष्ट्री दधातु नौ ॥१५॥

[ऋ स १०. ८५. ४७ ; पा गृ १. ४. १४। गो गृ २. २. १५ ; खा गृ १. ३. ३० ; आ गृ १. ८. ६ ; शा गृ १. १२. ५ द्र: । आप म १. ११. ३—देष्ट्री दिदेष्टु नौ। ]

1 See *Āpastamba-mantrapāṭha* or *Ekāgnikāṇḍa* 1. 2. 14.

2 Guṇ reads मायोष्ठ्याः.

3 Rudraskanda on *Kh. Gṛ.* 1. 3. 27.

अनुष्टुबियं मूर्धाभिषेचने विनियुक्ता अबादिदेवताका।

हे कन्यके नौ आवयोः हृदयानि हृदये आपः विश्वे देवाः समञ्जन्तु शोधयन्तु अकलुषीकुर्वन्तु। मातरिश्वा च वायुः संशोधयतु। धाता च प्रजापतिः संशोधयतु। किञ्च समुदेष्ट्री दधातु नौ देष्ट्री उपदेशदात्री देवता नौ संदधातु आवयोर्हृदये एकीकरोतु। समाप इत्यादिषु व्यवहितोपसर्गसम्बन्धः। उकारः पादपूरणार्थः॥१५॥

तथाऽवसिक्तस्य वरस्य जपे समञ्जन्त्वित्यस्य विनियोगः। सूत्रितं च [खा गृ १. ४. ३०] समञ्जन्त्वित्यवसिक्तः॥ जपेदित्यर्थः।

पाठस्तु समञ्जन्तु विश्वे देवा इति। अनुष्टुबस्य च्छन्दः। विश्वेदेवादयो देवताः।

हे बधु नौ आवयोः हृदयानि अन्तःकरणानि विश्वे देवाः समञ्जन्तु सम्यक् स्निग्धानि कुर्वन्तु अकलुषाणि कुर्वन्त्वित्यर्थः। तथा अपश्च समञ्जन्तु। एवमक्तानि नौ आवयोः हृदयानि मातरिश्वा मातरि अन्तरिक्षे श्वसितीति मातरिश्वा वायुः सन्दधातु सन्धानं करोतु। सर्वेषु कार्येष्वानुकूल्ययुक्तानि करोत्वित्यर्थः। तथा धाता सर्वस्य कर्ता तन्नामको देवः सन्दधातु। अपि च देष्ट्रो सर्वकर्मस्वनुज्ञात्री देवता सन्दधातु॥१५॥

गृभ्णामि ते सौभगत्वाय हस्तं
मया पत्या जरदष्टिर्यथाऽसः।
भगो अर्यमा सविता पुरन्धि-
र्मह्यं त्वाऽदुर्गार्हपत्याय देवाः॥१६॥

[ आप म १. ३. ३—सुप्रजास्त्वाय हस्तं ; ऋ स १०. ८५. ३६। गो गृ २. २. १६ ; खा गृ १. ३. ३१ ; आ गृ १. ७. ३ द्रः। जै गृ १. २१—गृह्णामि, यथासत ]

त्रिष्टुबियम्। षण्णामवसेकदेश एव पत्युर्गृहीतपाणेर्जपे विनियोगः। भगादयो देवताः।

हे कन्यके ते तव हस्तं गृभ्णामि गृह्णामि। हृग्रहोर्भश्छन्दसि [पा महाभाष्य ८. २. ३२] इति ग्रहेर्हकारस्य भकारः। सौभगत्वाय सौभाग्याय मया पत्या सह जरदष्टिः जरान्तं यावत् यथा असः यथा भवसि। किमर्थं ते पाणिं गृह्णामि—यस्मात् भगः अर्यमा सविता च पुरन्धिः अग्रणीः एते देवाः मह्यं त्वा त्वां गार्हपत्याय गार्हस्थ्याय अदुः दत्तवन्तः॥१६॥

गृभ्णामीत्यादीनां षरणां वधूपाणिग्रहजपे विनियोगः। तथा च सूत्रितम् [खा गृ १, ३, ३१]—दक्षिणं पाणिं साङ्गुष्ठं गृह्णीयात् गृभ्णामि त इति षड्भिरितीति।

तत्र प्रथमो गृभ्णामि त इति। त्रिष्टुप् छन्दः। भगादयो देवताः।

हे कन्यके तव हस्तं गृभ्णामि। हृग्रहोर्भश्छन्दसीति भत्वम्। किमर्थम्—सौभगत्वाय शोभनश्चासौ भगश्च सुभगः तस्य भावः सौभगम्। सौभगमेव सौभगत्वं तदर्थम्। पत्या मया सह त्वं यथा येन प्रकारेण। जरदष्टिः—अष्टिः अशनं व्याप्तिः—जरती अष्टिर्यस्याः सा तथोक्ता जरापर्यन्तजीवना यथा असः अभवस्तदर्थं गृभ्णामीत्यर्थः। किं च भगादयो देवाः मह्यं त्वा त्वां गार्हपत्याय एतस्याग्नेः शुश्रूषार्थम् अदुर्दत्तवन्तः। पुरन्धिर्बहुधीः। तदेतद्व्यवहितमपि भगविशेषणम्। 'पुरन्धिर्बहुधीः। तत् कः पुरन्धिः। भग' इति निरुक्तम् [६, १३]॥१६॥

**अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः।**
**वीरसूर्जीवसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे॥१७॥**

[ ऋ स १०. ८५. ४४ ; पा गृ १. ४. १६—जीवसूरिति नास्ति। आप म १. १. ४ ; जै गृ १. २१—वीरसूरिति नास्ति। गो गृ २. १६ ; खा गृ १. ३. ३१ द्रः ]

**त्रिष्टुबियमाशीर्वादपरा कन्यादेवता।**

**हे कन्यके अघोरचक्षुः अक्रूरदृष्टिः अपतिघ्नी अपतिघातिनी च एधि भव। किञ्च शिवा पशुभ्यः पशूनां च सुखा भव[1]। सुमनाः सुचेताः सुवर्चाः शोभनतेजाः वीरसूः पुत्रप्रसवा जीवसूः जीवत्पुत्रा देवकामा पञ्चमहायज्ञाभिरता स्योना सुखकरी शं नः अस्माकं सुखरूपा भव। द्विपदे शम्। चतुष्पदे च॥१७॥**

अथ द्वितीयाऽघोरचक्षुरिति। त्रिष्टुबियम्। कन्याया उच्यमानत्वात् सैव देवता।

हे कन्यके त्वम् अघोरचक्षुः पत्यादिष्वभयंकरदृष्टिः एधि भव। तथा पतिघ्नी अपतिघातिनी चैधि। प्रसन्नदर्शना पतिप्रिया च भवेत्यर्थः। किं च पशुभ्यः गवादिभ्यः शिवा शुभकरी चैधि। सुमनाः शोभनमनोयुक्ता चैधि। सुवर्चाः शोभनरूपा चैधि। किं च वीरसूः वीराः पुमपत्यानि तेषां प्रसवित्री चैधि। तथा जीवतां पुत्राणां प्रसवित्री चैधि। देवकामा देवान् यागार्थं कामयमाना चैधि।

1 B adds पश्वर्थं च, I पश्वर्थं वा.

स्योना—स्योनेति सुखनामैतत्—सुखकरी चैधि। किं च नः अस्माकं द्विपदे पादद्वयोपेताय पुत्रभृत्यादिकाय शं भव। तथा चतुष्पदे गवादिकाय शं भव ॥१७॥

आ नः प्रजां जनयतु प्रजापति-
राजरसाय समनक्त्वर्यमा।
अदुर्मङ्गलीः पतिलोकमा विश
शं नो भव द्विपदे शं चतुष्पदे ॥१८॥

[ ऋ स १०. ८५. ४३ ; आ गृ १. ८. ९ ; गो गृ २. २. १६ ; खा गृ १. ३. ३१ द्रः। जै गृ १. २१ ; आप म १. ११. ५—शं न एधि द्विपदे ]

**अगतीयं प्रजापतिदेवताका।**

**प्रजापतिः स्रष्टा नः अस्माकं प्रजां पुत्रपौत्रादिरूपाम् आजनयतु उत्पादयतु आजरसाय जरान्तं यावत्। किञ्च तां प्रजां समनक्तु व्यञ्जयतु प्रकटगुणां करोतु अर्यमा देवः। हे कन्यके यतः मङ्गलीः मङ्गलवत्यो देवताः त्वां मह्यम् अदुः[1] दत्तवत्यः—अतः पतिलोकं पतिकुलम् आविश प्रविश। शेषं गतार्थम् ॥१८॥**

अथ तृतीय आ नः प्रजामिति। जगत्यस्य च्छन्दः। प्रजापतिरर्यमा च लिङ्गोक्ते देवते।

नः अस्माकम् अस्यां कन्यकायां प्रजानां पतिः प्रजास्रष्टा देवः प्रजां पुत्रादिरूपाम् आजनयतु आभिमुख्येनोत्पादयतु। जातां नः प्रजामर्यमा देव आजरसाय जरान्तं जीवनाय समनक्तु व्यनक्तु। किञ्च हे कन्यके त्वम् अदुर्मङ्गलीः दुर्मङ्गलरहिता सती। सुपां सुपो भवन्तीति सोः स्थाने शस्। पतिलोकं पतिकुलं पतिसमीपं वा आविश। शिष्टं गतम्। [1]केचिददुर्मङ्गलीरितीमं पदद्वयं कृत्वा यतस्त्वां मङ्गलवत्यो योषितः प्रादुरिति योजयन्ति। तेषां पक्षे ऐकस्वर्यं विरुध्येत ॥१८॥

1 Sāyaṇa, who takes अदुर्मङ्गलीः as one word, refers to the interpretation as given in Guṇ's *Bhāṣya*. Sāyaṇa's reference to *kecit* in this connection probably points to Guṇaviṣṇu.

इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृधि ।
दशास्यां पुत्राना धेहि पतिमेकादशं कुरु ॥१९॥

[ ऋ स १०. ८५. ४५ –सुभगां कृणु ; आप म १. ४. ६—सुभगां कुरु ;
गो गृ २. २. १६ ; खा गृ १. ३. ३१ द्रः ]

**अनुष्टुबियम्। इन्द्रो देवता।**

**हे इन्द मीढ्वः उदकप्रक्षेप्तः इमां कन्यकां सुपुत्रां सुभगां कृधि कुरु। किञ्च अस्यां कन्यकायां दश पुत्रान् आधेहि गर्भान् कुरु प्रजनय। पतिं भर्तारं च अस्या एकादशं कुर्विति प्रार्थ्यते ॥१९॥**

अथ चतुर्थमाहेमां त्वमिति । अनुष्टुबस्य च्छन्दः । इन्द्रो देवता ।

हे मीढ्वः वृष्ट्यादिफलस्य वर्धकेन्द्र त्वम् इमां नवोढां वधूं सुपुत्रां शोभनपुत्रोपेतां सुभगां भगो भजतेर्भाग्यम् शोभनभाग्यां च कृधि कुरु। अस्यां बध्वां दश पुत्रान् आधेहि आभिमुख्येन धेहि कुरु। पतिं माम् एकादशं एकादशसंख्यापूरकं कुरु। दश पुत्रान् तदुत्पादनपर्यन्तं पत्युर्जीवनं च कुर्वित्यर्थः ॥१६॥

सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव ।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥२०॥

[ ऋ स १०. ८५. ४६ । गो गृ २. २. १६ ; खा गृ १. ३. ३१ द्रः ।
आप म १. ६. ६—श्वश्रुवां भव ]

**अनुष्टुबियं कन्यादेवताका ।**

**हे कन्यके सम्राज्ञी प्रधानवशिनी श्वशुरे पत्युः पितरि भव। श्वश्र्वां भर्तुर्मातरि। तथा ननान्दरि पत्युर्भगिन्याम्। तथा अधि उपरि देवृषु देवरेषु। भवेति क्रियापदं सर्वत्र सम्बन्धनीयम् ॥२०॥**

अथ पञ्चमः सम्राज्ञी श्वशुर इति । अनुष्टुबस्य च्छन्दः । कन्या देवता ।

हे कन्यके श्वशुरे पत्युः पितरि सम्राज्ञी सम्यग्राजमाना सौशील्येन सम्यक् शोभमाना भव। तथा श्वश्र्वां पत्युर्मातरि सम्राज्ञी भव। तथा ननान्दरि भर्तुर्भगिन्यां सम्राज्ञी भव। तथा अधि देवृषु। अधीति सप्तम्यर्थानुवादी। देवरेषु सम्राज्ञी भव। श्वशुरादिषु तत्प्रियाचरणेन प्रियतमा भवेत्यर्थः ॥२०॥

मम व्रते ते हृदयं दधातु मम चित्तमनु चित्तं ते अस्तु ।
मम वाचमेकमना जुषष्व बृहस्पतिस्त्वा नियुनक्तु मह्यम् ॥२१॥

[ मा गृ १. १०. १३ ; पा गृ १. ८. ८ । आ गृ १. २१. ७ ; शा गृ २. ४. १— व्रते हृदयं ते दधामि । गो गृ २. २. १६ ; खा गृ १. ३. ३१ द्रः । जै गृ १. १२ द्रः ]

त्रिष्टुबियं प्रार्थनायां विनियुक्ता प्रार्थ्यमानदेवताका ।

हे कन्यके ते तव हृदयं मनः मम व्रते कर्मणि दधातु स्थापयतु । अन्यस्य कर्तृपदस्यात्राश्रुतत्वात् सैव प्रथमपुरुषव्यत्ययेनोच्यते । एतदुक्तं भवति— मद्व्रते स्वहृदयं निधेहीति । अन्यच्च मम चित्तम् अनु येन मे चित्तं तेन ते तव चित्तमस्तु । एतदुक्तं भवति—आवयोरेकचित्तं भवत्वित्यर्थः । किञ्च मम वाचं मदीयां वाणीम् एकमनाः अनन्यचेताः सती जुषष्व सेवस्व । प्रीतियुक्तां वाचं कुर्वित्यर्थः । किञ्च बृहस्पतिः सुरगुरुः त्वा त्वां मह्यं मदर्थं नियुनक्तु नियोजयतु सम्बन्धयत्विति यावत् ॥२१॥

इति भट्ट-गुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये प्रथमप्रपाठके द्वितीयः खण्डः ॥

अथ षष्ठो मम व्रत इति । अनुष्टुबयम् । प्रतिपाद्यमाना कन्यकैव देवता ।

हे कन्यके ते हृदयम्—अत्र हृदयशब्देन तत्पूर्वकं कर्म लक्ष्यते—त्वदीयं कर्म मम व्रते मदीये कर्मणि लौकिके वैदिके च दधातु वर्ततामित्यर्थः । तथा मम चित्तमनुसृत्यैव ते तव चित्तमस्तु । यदहं ध्यायामि तत्तव मनोऽनुवर्ततामित्यर्थः । किं च मम वाचं मामकं वचनम् एकमना जुषस्व एकाग्रचित्ता सती सेवस्व । तदेव- मानुकूल्यमाशासितं भवति । किं च त्वा त्वां बृहस्पतिर्मन्त्राभिमानी देवः मह्यं नियुनक्तु नियोजयतु ॥२१॥

॥*॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणमन्त्रपर्वणि द्वितीयः खण्डः ॥*॥

---

## अथ प्रथमप्रपाठके तृतीयः खण्डः

लेखासन्धिषु पक्ष्मस्वावर्तेषु च यानि ते ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥१॥
केशेषु यच्च पापकमीक्षिते रुदिते च यत् ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥२॥
शीलेषु[1] यच्च पापकं भाषिते हसिते च यत् ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥३॥
आरोकेषु च दन्तेषु हस्तयोः पादयोश्च यत् ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥४॥
ऊर्वोरुपस्थे जङ्घयोः सन्धानेषु च यानि ते ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥५॥
यानि कानि च घोराणि सर्वाङ्गेषु तवाभवन् ।
पूर्णाहुतिभिराज्यस्य सर्वाणि तान्यशीशमम् स्वाहा ॥६॥

[ गो गृ २. ३. ६ ; खा गृ १. ४. ३ द्र: ]

**लेखासन्धिष्वित्यादेर्यानि कानि चेत्येवमन्तस्य मन्त्रषट्कस्यानुष्टुप् छन्द उत्तरविवाहे पाणिग्राहस्याज्यहोमे विनियोगः । अभिधीयमाना देवता ।**

**हे कन्यके ते तव लेखासन्धिषु पक्ष्मसु नेत्रपिधानेषु आवर्तेषु कुकुन्द-रेषु द्वारेषु वा । चोऽनुक्तसमुच्चयार्थः । एवमन्येऽपि चकारा बोध्याः । यानि अपलक्षणानि तानि ते पूर्णाहुत्या सर्वाणि शमयामि नाशयामि अहं पाणि-ग्राहकः ॥१**

लेखाप्रभृतीनां षण्णां विवाहानन्तरभाविहोमे विनियोगः । तथा च सूत्रितम्—

1 C शीले च

[ खा गृ १, ४, ३ ] प्रोक्ते नक्षत्रेऽन्वारब्धायां स्रुवेणोपघातं जुहुयात् । षड्भिर्लेखाप्रभृतिभिः सम्पातानवनयन् मूर्धनि वध्वा इति ॥ प्रोक्ते अन्येन नक्षत्राण्युदितानीत्यभिहित इत्यर्थः । सर्वेऽप्यनुष्टुभः । अभिधीयमाना देवताः ।

तत्र प्रथमो लेखासन्धिष्विति ।

हे कन्यके ते तव लेखासन्धिषु यानि पापकानि हस्तपादगतेषु सन्ति । हस्तेष्वायुरन्नविद्यादि-साधिका तद्विपरीताश्च रेखासन्धयस्तेषु सन्धिषु यानि पापकानि स्त्रीविरुद्धलक्षणानि । तथा पक्ष्मसु नेत्रोर्ध्वाधोभागवर्तिसूक्ष्मरोमावलीषु यानि पापकानि । तथा आवर्तेषु शिरःस्कन्धभुजादि-प्रदेशवर्तिषु रोमवलयेषु यान्यप्रदक्षिणरूपाणि पापकानि दुर्लक्षणानि । तानि सर्वाण्यपि पूर्णया आज्यभरितया आहुत्या अहं पतिः शमयामि शान्तानि करोमि ॥१॥

**केशेषु बालेषु ईक्षिते दर्शने रुदिते अश्रुविमोचने यत् किञ्चित् पापकम् अपलक्षणं तानि पापकानि। पूर्णाहुत्येति गतार्थम् ॥२॥**

अथ द्वितीयः केशेषु यच्च पापकमिति ।

हे कन्यके तव केशेषु यत् पापकं कर्बूरपिङ्गलवर्णादिरूपमस्ति । तथा ईक्षित अवलोकने काकावलोकनमिव तिर्यग्वर्ति यत् पापकमस्ति । तथा रुदिते यत् पापकम् । तानि सर्वाणि अहं शमयामि ॥२॥

**शीलेषु वृत्तेषु चशब्दादाभिरूप्ये च । तथा भाषिते भणिते । हसिते हसने । चशब्दाद् गमने च। यत् पापकम् अपलक्षणम्। तानि ते पूर्णाहुत्येति गतार्थम् ॥३॥**

अथ तृतीयः शीलेषु यच्च पापकमिति ।

शीलं वर्तनम् भाषितहसिते प्रसिद्धे । चकारोऽनुक्तसमुच्चयार्थः । शीलादिषु यानि पापकानि तानि शमयाम्यहम् ॥३॥

**आरोकेषु दन्तान्तरेषु । चशब्दादोष्ठयोः । दन्तेषु दशनेषु । हस्तयोः करयोः । पादयोः चरणयोश्च । चशब्दाद् गुल्फयोश्च । यत् पापकं तानि ते पूर्णाहुत्येति गतार्थम् ॥४॥**

अथ चतुर्थ[1] ऊर्वोरुपस्थ इति ।

ऊर्वादिसन्धिषु च यानि पापकानि दुर्लक्षणानि तानि शमयामि ॥४॥ [५]

**ऊर्वादि स्पष्टार्थम् । लेखासन्धिव्यतिरिक्तेषु अन्येषु सन्धानेषु सन्धिषु । चकारात् मुखे च यानि तवापलक्षणानि तानि ते पूर्णाहुत्येति गतार्थम् ॥५॥**

1 Guṇaviṣṇu has explained this as the 5th Mantra.

अथ पञ्चम आरोकेषु च दन्तेष्विति ।

आरोकेषु लस्य स्थाने छान्दसं रत्वम् । आलोक्यन्त इत्यालोका मुखाद्यवयवास्तेषु । तथा दन्तेषु हस्तयोः पादयोश्च यान्यपलक्षणानि सन्ति तानि शमयामीति ॥५॥ [४]

**यानि कानि च प्रकृतानि चशब्दादप्रकृतानि च घोराणि क्रूराण्यपलक्षणानि तव सर्वाङ्गेषु हे वधु अभवन् बभूवुः। तानि पूर्णाहुतिभिः पूर्णस्रुवहोमेन। आज्यस्य घृतस्य। सर्वाणि अशेषाणि अशीशमम् शमितवानस्मि ॥६॥**

अथ षष्ठो यानि कानि चेति ।

यानि कानि च घोराणि भयङ्कराणि दुर्लक्षणानि सर्वाङ्गेषूक्तव्यतिरिक्तेष्वभवन् तानि सर्वाणि आज्यस्य पूर्णाहुतिभिरशीशमं शान्तान्यकार्षम् । चकार उक्तमन्त्राङ्गैः सह समुच्चयार्थः ॥६॥

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् ।
ध्रुवासः पर्वता इमे ध्रुवा स्त्री पतिकुले इयम् ॥७॥

[ ऋ स १०. १७३. ४ ; अ स ६. ८८. १ द्रः ; तै ब्रा २. ४. २. ८ द्रः ।
खा गृ १. ४. ४ ; गो गृ २. ३. १२ द्र. ]

**अनुष्टुबियम् । आमन्त्रणे विनियोगः । अभिधीयमाना देवता । यथेत्यध्याहार्यम् । यत्तदोर्नित्यसम्बन्धः[1] । अयं च वाक्यार्थः—यथा ध्रुवा स्थिरा द्यौः यथा च ध्रुवा पृथिवी यथा च ध्रुवं विश्वं सर्वम् इदं प्रत्यक्षं जगत् चराचरम् ध्रुवासः ध्रुवाः पर्वता गिरय इमे हिमवदादयः तथा इयम् एषा स्त्री पतिकुले भर्तृगृहे ध्रुवा स्थिरा भवत्विति सम्बन्धः ॥७॥**

ध्रुवा द्यौरित्ययं च वध्वा ध्रुवदर्शने विनियुक्तः । तथा च सूत्रितम् [खा गृ १, ४, ४]—

प्रदक्षिणमग्निं परिक्रम्य ध्रुवं दर्शयति ध्रुवा द्यौरितीति ॥

अनुष्टुबस्य च्छन्दः । द्युलोकादयो लिङ्गोक्ता देवताः ।

यथा द्यौः ध्रुवा द्योतमानो द्युलोको ध्रुवो निश्चलो वर्तते यथा च पृथिवी प्रथनवती भूमिर्ध्रुवा वर्तते । यथा च विश्वं कृत्स्नमिदं पुरतः प्रत्यक्षं जगत् जगदात्मकं प्रपञ्चं ध्रुवम् । उपचरितमस्य ध्रुवत्वम् । यथेमे पुरतः प्रत्यक्षं वर्तमानाः पर्वताः पर्वान्तोपेता हिमवदादयो

1 A omits the remark.

ध्रुवासः ध्रुवा वर्तन्ते। तथा इयं नवोढा स्त्री वधूः पतिकुले पतिवंशे ध्रुवा भवत्विति शेषः। यद्वा ध्रुवेति सिद्धवदनुवादोऽयम् ॥७॥

**अन्नपाशेन मणिना प्राणसूत्रेण पृश्निना।**
**बध्नामि सत्यग्रन्थिना मनश्च हृदयं च ते ॥८॥**

[ गो गृ २. ३. २१ ; खा गृ १. ४. १० द्र. ]

**अनुष्टुबियमन्नप्राशने विनियुक्ताऽन्नदेवताका।**

**हे वधु ते तव मनः चित्तम् चशब्दाद्बुद्धिश्च। हृदयम् अन्तर्गतम्। चशब्दः पूर्वापेक्षः। अहं परिणेता बध्नामि। बध बन्धने। केन—अन्नपाशेन अन्नरूपबन्धनेन। अन्नबन्धनेन मणिनेत्युपमा। आत्मना सह मणिभूतेन। किञ्च पृश्निना। किम्भूतेन—प्राणसूत्रेण प्राणः सूत्रभूतो यस्य तद्भवति प्राणसूत्रम्[1]। 'अन्नं वै देवाः पृश्नीति वदन्ति'।[2] तेन बध्नामीत्यपेक्षते। पुनरपि तदेव विशिष्यते। सत्यग्रन्थिना सत्यं ग्रन्थिरिव यस्य तद्भवति सत्यग्रन्थिः। अतस्तेनेति ॥८॥**

अन्नपाशेनेत्यनयोर्मन्त्रयोर्विवाहदिवसेष्वानीतहविष्यान्नजपे विनियोगः। तथा च सूत्रम् [ खा गृ १. ४. १० ]—हविष्यमन्नं परिजप्यान्नपाशेनेति ॥ अथवा सूत्रे प्रथमस्यैव निर्देशादुत्तरमन्त्रो[3] वधूहृदयस्पर्शने लिङ्गाद्विनियुज्यते।

अस्यानुष्टुबुत्तरस्य[3] च त्रिष्टुप् छन्दः। अन्नहृदये क्रमेण देवते।

हे कन्यके ते तव मनश्च। हृदयापेक्षया चशब्दः। तव हृदयं च बुद्धिं च। अत्रापि मनोऽपेक्षया चशब्दः। कर्तृकरणशक्त्योर्भेदेन हृदयमनसोः पृथगुपादानम्। तदुभयम् अन्नपाशेन। पाशो बन्धनदाम। अत्रान्नादयः पाशादिकल्पनया निरूप्यन्ते। अन्नमेव पाशो यस्य तथोक्तं तेन। अन्नं दाम इति हि श्रुतिः[4]। तथाविधेन मणिना [5]मणिवत् स्फारकेण[5] मनसेत्यर्थः।

1 B adds तेनान्नेन.
2 *Tāṇḍya Br.* 12. 10. 24.
3 The *uttara* (next) Mantra, according to Sāyaṇa, is formed by Nos. 9 and 10 which Guṇaviṣṇu treats as separate Mantras.
4 *Bṛ. Up.* 2. 2. 1 : प्राणः स्थूणाऽन्नं दाम
5 B[1] मणिमद्व्यापारेण ; M[2] मणिवत्स्यदोरकेन

अन्नमयं हि सोम्य मन इति श्रुतिः[1] । किं च प्राणसूत्रेण प्राण एव सूत्रवद्बन्धको[2] यस्य स तथोक्तस्तथाविधेन । पृश्निना प्राश्नुते सर्वं व्याप्नोतीति पृश्निर्बुद्धिपदार्थः । उक्तलक्षणेन मदीयेन मनसा बुद्ध्या च बध्नामि मामकेन मनसा चित्तेन च तावकं मनश्चित्तं च बध्नामीत्यर्थः । पुनः कीदृशेन मणिना पृश्निना च—उच्यते । सत्यग्रन्थिना एतदुभयविशेषणम् । सत्याख्यो ग्रन्थिर्यस्य स तथोक्तः । सत्ययुक्तेन मनसा सत्ययुक्तेन चित्तेन चेत्यर्थः ॥८॥

यदेतद्धृदयं तव तदस्तु हृदयं मम ।
यदिदं हृदयं मम तदस्तु हृदयं तव ॥९॥
अन्नं प्राणस्य षड्विंशस्तेन बध्नामि त्वासौ ॥१०॥

[ गो गृ २. ३. २१ ; खा गृ १. ४. १० द्रः ]

**अनुष्टुबियं प्रार्थ्यमानदेवता हृदयैक्यप्रार्थने विनियुक्ता ।**

**हे कन्यके यदेतत् प्रत्यक्षमुक्तलक्षणं हृदयं तव सम्बन्धि तत् मम भवतु मम सम्बन्धि च तव । आवयोरेकं हृदयं भवत्वित्यर्थः ।।९।।**

**द्विपदा गायत्रीयमन्नस्तुतौ विनियुक्ताऽन्नदेवताका ।**

**हे कन्यके अन्नम् अदनीयं प्राणस्य वायुराजस्य षड्विंशः बन्धनं यतः अतः तेन अन्नेन त्वा त्वां बध्नामि । असौ एषोऽहं परिणेता[3] ॥१०॥**

अथ द्वितीयमन्त्रमाह यदेतद्धृदयं तवेति ।

यदेतद्यदिदमिति च वाक्यद्वयं सरसम्[4] । एतद्दार्ढ्याय व्यतिहारेणोक्तत्वादपुनरुक्तिः । किं च हे वधु असौ विवोढाह[3] यदेतदन्नमस्ति तत् प्राणस्य षड्विंशः पादबन्धनरज्जुः । सा यथाऽश्वस्य पादं पलायनप्रतिरोधेन बध्नाति तद्वदिदं प्राणं बध्नातीत्यर्थः ।

1 *Ch. Up.* 6. 5. 4.
2 See *Ch. Up.* 6. 8. 2: प्राणबन्धनं हि सोम्य मन इति.
3 Sāyaṇa and Guṇaviṣṇu take असौ as referring to the bridegroom. But according to *Kh. Gṛ.* 1. 4. 10 and *Bhaṭṭa Bhāṣya* on *Go. Gṛ.* 2. 3. 21 असौ refers to the bride: *Kh. Gṛ.*—असाविति वध्वा नाम ब्रूयात् ; *Bhaṭṭa Bhāṣya*—असावित्येतस्मिन् सम्बोधनविभक्त्या भार्यानाम गृह्णीयात्.
4 B[1], G स्पष्टम्

अन्नाभावे प्राणाभावादन्नं हि प्राणः[1] इति श्रुतेश्च प्राण एवान्नम्। तेनान्नेन त्वां बध्नामि अस्मदधीनं करोमीत्यर्थः ॥९-१०॥[2]

सुकिंशुकं शल्मलिं विश्वरूपं
सुवर्णवर्णं सुकृतं सुचक्रम्।
आ रोह सूर्ये अमृतस्य नाभिं
स्योनं पत्ये वहतुं कृणुष्व ॥११॥

[ गो गृ २. ४. १ द्रः। ऋ स १०. ८५. २०—सुव्रतं, अमृतस्य लोकं; आप म १. ६. ४ —सुव्रतं, आरोह वध्वमृतस्य लोकं; मा गृ १. १३. ६—सुव्रतं, अमृतस्य लोकं, वहतं ]

**त्रिष्टुबियं रथारोहणे विनियुक्ता कन्यादेवता।**

**सूर्यस्य पत्नी सूर्या। सूर्येव सूर्या उपचारात् प्रकृता वधूरुक्ता। हे सूर्ये हे वधु वहतुं यानं रथम् आरोह आक्राम आदित्यपत्नीवादित्यस्य। किम्भूतम्—शल्मलिं शाल्मलिमिव सुकिंशुकम्। किंशुकशब्देन शल्मलिपुष्पमुच्यते। शोभनं पलाशपुष्पमिव पुष्पमस्येति सुकिंशुकं रक्तमित्यर्थः। इह रक्तता पुष्पसामान्यात्। पुनरपि तमेव विशिनष्टि—विश्वरूपं नानारूपं सुवर्णवर्णं काञ्चनकान्ति। सुकृतं सुष्ठु कल्पितम्। ऋग्वेदे तु सुवृतमिति पाठः[3]। सुचक्रं प्रशस्तपादम्। किम्भूतम्—अमृतस्य पानीयस्य नाभिम् उत्पत्तिस्थानम्। एतदुक्तं भवति—तवाप्येष पुत्रपशुधनधान्यानामुत्पत्तिस्थानं भवत्वित्यर्थः। किञ्च स्योनं सुखं पत्ये वोढ्रे कृणुष्व कुरुष्व ॥११॥**

ईक्षकावेक्षणरथारोहणदुर्गानुमन्त्रणादीन्यभिरूपाभिरित्युक्तत्वात्[4] सुमङ्गलीः सुकिंशुकमित्यादयो मन्त्रलिङ्गाद्वधूदर्शने रथारोहणादिषु विनियुक्ताः। तत्र सुमङ्गलीरित्ययं गतः। सुकिंशुकमित्ययं लेखाहोमानन्तरं प्रयाण उपपन्ने वध्वा रथारोहणे विनियुक्तः।

पाठस्तु—सुकिंशुकं शल्मलिमिति। त्रिष्टुबस्य च्छन्दो मन्त्रप्रतिपाद्या कन्यका देवता।

1 *Ś. Br.* 3. 8. 4. 8; 4. 3. 4. 25; see also *T. Br.* 3. 2. 3. 4.

2 Sāyaṇa explains the texts of the Mantras 9 and 10 as constituting a single unit.

3 *Ṛv.* 10. 85. 20

4 *Kh. Gr.* 1. 4. 27

अस्य सूर्याया विवाहप्रतिपादनार्थत्वादिह सूर्याशब्देन प्रकृतानुगुण्येन वधूरुच्यते। हे सूर्ये सूर्यासदृशि वधु वहतुं वहनयोग्यं रथम् आरोह अधितिष्ठ। कीदृशम्—सुकिंशुकं सुकाशनं सुष्ठु प्रकाशमानं शल्मलिं मलापेतम्[1] अदुष्टमित्यर्थः। अथवा उपमाप्रधानोऽयं निर्देशः। सुकिंशुकमिव स्थितम्। किंशुको नाम वृक्षविशेषः पुष्पादिभिः प्रकाशमानः। तं यथौत्सुक्येन पश्यन्ति तद्वद्दर्शनीयमित्यर्थः। शल्मलिं शरवन्तं मार्गविघातिनां परिहाराय बहुशरोपेतमित्यर्थः। तथा च यास्कः [ निरु १२. ८ ]

किंशुकं कंशतेः प्रकाशयतिकर्मणः। शल्मलिः सुशरो भवति शरवान् वा इति।

विश्वरूपं सुवर्णवस्त्राद्यलङ्कारेण नानारूपम् हिरण्यवर्णं हितरमणीयवर्णोपेतं हिरण्यसदृशवर्णं वा सुकृतं सुष्ठु सम्पादितम्। सुवृतमिति बह्वृचानां पाठः। सुचक्रं शोभनक्रमणसाधनावयवम्। अमृतस्य नाभिम् अमरणधर्मकाममोक्षसदृशस्य सुखस्य बन्धकम्। एवमुक्तगुणविशिष्टं रथमारोहेति समन्वयः। आरुह्य च पत्ये वराय मह्यं स्योनं कृणुष्व—स्योनमिति सुखनाम[2]—सुखं कुरु। अयं मन्त्रो निरुक्ते 'सुकाशनं शन्नमल'मित्यादिना व्याख्यातः[3]। सोऽत्र द्रष्टव्यः ॥११॥

## मा विदन् परिपन्थिनो य आसीदन्ति दम्पती।
## सुगेभिर्दुर्गमतीतामप द्रान्त्वरातयः ॥१२॥

[ ऋ स १०. ८५. ३२; आप म १. ६. १०; आ गृ १. ८. ६; गो गृ २. ४. २ ]

**अनुष्टुबियं चतुष्पथाद्यामन्त्रणे विनियुक्ता आशास्यमानदैवता।**

**इमौ दम्पती जायापती स्वगृहं यान्तौ परिपन्थिनः चौरा मा विदन् मा जानन्तु। किम्भूताः—ये आसीदन्ति ये अवरुन्धन्ति। दम्पती वधूवोढारौ। किञ्च सुगेभिः सुगमैर्मार्गैः दुर्गं दुर्गमम् अतीताम् अतिशयेन गच्छताम्। किञ्च अन्येऽपि अरातयः शत्रवः अनयोर्गच्छतोः अपद्रान्तु अपगच्छन्त्वित्यर्थः ॥१२॥**

रथमारुह्य गच्छतोर्वधूवरयोर्भयस्थाने सम्प्राप्ते मा विदन्निति जपेन्मन्त्रलिङ्गात्।

पाठस्तु—मा विदन् परिपन्थिन इति। अनुष्टुबस्य च्छन्दः। मन्त्रप्रतिपाद्या देवता।

दम्पती वधूवरौ भूतौ युवां परिपन्थिनः मार्गे हिंसकाश्चोरा[4] मा विदन् मा जानन्तु। ये परिपन्थिन आसीदन्ति आसन्ना भवन्ति युवयोर्विघातार्थम्। किं च तौ दम्पती सुगेभिः सुखेन

1 G शामलोपेतम्
2 *Nigh*. 3. 6. 15
3 *Nir*. 12. 8
4 M[1] & M[2] ०श्चोग्रा

गन्तुं शक्यैर्मार्गैः दुर्गं दुर्गमं मार्गम् अतीताम् अतिक्रम्य गच्छताम्। किं चान्ये अरातयोऽशोभनमार्गप्रदातारः शत्रवः अपद्रान्तु अपसृत्य कुत्सितं गच्छन्तु। द्रा कुत्सायां गतौ ॥१२॥

इह गावः प्र जायध्वमिहाश्वा इह पूरुषाः ।
इहो सहस्रदक्षिणोऽपि पूषा नि षीदतु ॥१३॥

[ का स ३५. २१ द्रः। अ स २०. १२७. १२ ; शा श्रौ १२. १५. १. ३—नि षीदति ; आप म १. ६. १—रायस्पोषो नि षीदतु ; गो गृ. २. ४. ६ द्रः ; जै गृ १. २२—इह गावो नि षीदन्तु, अभि पूषा ]

**अनुष्टुबियं गृहप्रवेशने विनियुक्ता आशास्यमानदैवता।**

**इह अस्मिन् गृहे हे गावः प्रजायध्वं पुत्रपौत्रादिसन्ततिद्वारेण प्रभूता[1] भवतेति यावत्। प्रार्थनायां लोट्। अथवा लोट्प्रथमपुरुषबहुवचनस्य व्यत्ययेन मध्यमपुरुषबहुवचनाल्लोडाशिषि। अयमर्थः—इह गृहे वधूवरसम्बन्धिनि गावः प्रजायन्तामुत्पद्यन्ताम्। तथा अश्वाः। तथा पूरुषाः पुरुषा इव पुरुषाः पुत्रादयः। उ निपातः। अपि चार्थः। अपि च इह अस्मिन् गृहे पूषा अपि देवता निषीदतु उपविशतु। किम्भूतः—सहस्रदक्षिणः। एतदुक्तं भवति—यस्य प्रसादेन गोसहस्रदक्षिणा अपि क्रतवः सम्पद्यन्ते ॥१३॥**

इह गाव इत्ययं वरस्य गृहप्रवेशने विनियुक्तो मन्त्रलिङ्गात्।

पाठस्तु—इह गावः प्र जायध्वमिति। अनुष्टुबस्य च्छन्दो गवादयो देवताः।

इह मदीयगृहे गावः प्रजायध्वम्। आशीरर्थे लोट्। व्यत्ययेन प्रथमस्य स्थाने मध्यमः। प्रजायन्तां अपत्योत्पादनद्वारा वर्धन्ताम्। तथेहास्मिन् गृहे अश्वाः प्रजायन्ताम्। किं चेह गृहे पूरुषाः पुत्रभृत्यादिरूपाः प्रजायन्तात्। इहो इत्यत्र उशब्दोऽवधारणे। इहैव गृहे सहस्रदक्षिणः—दक्षिणाशब्दोऽत्र दानमात्रवाची—सहस्रहिरण्यादिदानयुक्तः पूषापि धनपोषकदेवोऽपि निषीदतु। धनमपि समृद्धं भवत्वित्यर्थो रायस्पोषो निषीदत्विति शाखान्तरपाठात्[2] ॥१३॥

1 A प्रसूता

2 The Āpastamba School of the Taittirīyas is meant here by शाखान्तर. See *Āp. Śr.* 9. 17. 1 and *Āpastamba-Mantrapāṭha* 1. 9. 1.

इह धृतिरिह स्वधृतिरिह रन्तिरिह रमस्व ।
मयि धृतिर्मयि स्वधृतिर्मयि रमो मयि रमस्व ॥१४॥

[ जै गृ १. २२ ; गो गृ २. ४. १० द्र: । वा स ८. ५१ ; आप म २. १८. ६ ;
हि गृ १. १२. २ ; मा गृ १. १. २२ द्र: ]

अस्य बृहती च्छन्दो होमे विनियोगः कन्यैव देवता ।

हे वधु इह अस्मिन् गृहे तव धृतिः मनसः प्रसादो भवतु। तथा स्वधृतिः स्वस्य त्वदीयस्य बन्धुवर्गस्य धृतिः मनसः प्रसादोऽस्तु। इह रन्तिः रमणं क्रीडा तवाऽस्तु। इह रमस्व क्रीड। मया सहेति वाक्यशेषः। किञ्च मयि भर्तरि तव धृतिर्मनःप्रसादोऽस्तु। मयि स्वधृतिः मद्विषये स्वस्य त्वदीयस्य बन्धुवर्गस्य धृतिर्मनसः प्रीतिरस्तु। तथा मयि मद्विषये रमः रमणम्। मयि च रमस्व मयि रक्ता भवेत्यर्थः ॥१४॥

इति भट्ट-गुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये प्रथमप्रपाठके
तृतीयः खण्डः ॥

शय्यायामुपविश्य वधूमीक्षमाण इह धृतिरिति जपेन्मन्त्रलिङ्गात्[1] ।

पाठस्तु—इह धृतिरिति। बृहतीच्छन्दस्कोऽयम् । गृहे वस्तव्या कन्यका देवता ।

हे वधु इहास्मिन्नन्तर्गृहे धृतिस्तव धृतिः धैर्यमचाञ्चल्यं भवत्विति शेषः। तथेह स्वधृतिः स्वाधीनं धैर्यं स्थैर्यं भवतु। तथेह गृहे रन्तिः क्रीडनं भवतु। त्वमपीह गृहे रमस्व। किञ्च हे वधु मयि भर्तरि धृतिस्तव धैर्यम्। स्थिरा भवत्विति शेषः। तथा मयि स्वधृतिः स्वकीयं धैर्यं भवतु। तथा मयि रमो रमणं क्रीडनमस्तु। त्वमपि मयि रमस्व क्रीड ॥१४॥

[2]इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणमन्त्रपर्वणि
तृतीयः खण्डः[2] ॥*॥

---

1 See Rudraskanda on *Kh. Gr.* 1. 4. 11.

2 B[2], G, M[1] do not give any Khaṇḍa colophon here. As a consequence, they have only seven divisions of Khaṇḍas in the first Prapāṭhaka instead of eight.

## अथ प्रथमप्रपाठके चतुर्थः खण्डः

अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ।
ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्याः पापी लक्ष्मी-
स्तामस्या अपजहि ॥१॥

वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ।
ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्याः पतिघ्नी
तनूस्तामस्या अपजहि ॥२॥

चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ।
ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्या अपुत्रया तनूस्ता-
मस्या अपजहि ॥३॥

सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ।
ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्या अपशव्या
तनूस्तामस्या अपजहि ॥४॥

अग्निवायुचन्द्रसूर्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयः स्थ । ब्राह्मणो वो नाथकाम उपधावामि याऽस्याः पापी लक्ष्मीर्या पतिघ्नी याऽपुत्रया याऽपशव्या तनूस्तामस्या अपहत ॥५॥

[ जै गृ १. १२ द्रः । गो गृ २. ५. २-५ ; खा गृ १. ४. १२ द्रः । शा गृ १. १८. ३-५ ; पा गृ १. ११. २ द्रः ; आप म १. १०. ३-५ द्रः ]

अग्ने प्रायश्चित्त इत्याद्या अग्निवायुचन्द्रसूर्या इत्यन्ताः पञ्च मन्त्रा निगदा ऋचो यजूंषि सामानि निगदा मन्त्रा इति परिभाषितत्वात्[1] । आमन्त्र्यमाणाग्न्यादिदेवताकाश्चतुर्थीहोमकर्मणि विनियुक्ताः ।

1 *Kāty. Śr.* 1. 3. 1

हे अग्ने । किम्भूत—प्रायश्चित्ते दोषस्य निष्कर्तः त्वं देवानाम् इन्द्रादीनां प्रायश्चित्तिः निष्कृतिः दोषस्यापहन्ता असि भवसि यतः अतः ब्राह्मणः अहं त्वा त्वाम् उपधावामि उपसर्पामि। किम्भूतः—नाथकामः याच्ञाकामः। तां याच्ञां दर्शयति—अस्याः कन्यकाया या पापी अशुभसम्बन्धिनी लक्ष्मीः शोभा ताम् अपजहि अपहर। स्फोटयेति यावत्[1]। उत्तरे तु चत्वारोऽनेनैव व्याख्याताः ॥१॥

वायो प्रायश्चित्त इत्यादि पूर्वेण तुल्यम्। पतिघ्नी तनूरिति विशेषः। पतिघ्नी पतिहन्त्री। पतिघ्नीति लक्षणे जायापत्योष्टक् [पा ३. २. ५२] इत्यनुवर्तमानेऽमनुष्यकर्तृके चेति [पा ३. २. ५३] टक् प्रत्ययः। भर्तृमारिणीति यावत्। तनुशब्दश्च समुदायवचनोऽप्यत्रावयवे वर्तते यथा ग्रामो दग्धः पटो दग्ध इति। तदेतदुक्तं भवति—अस्याः पतिघ्नीत्वदोषमपनय पतिचिरजीवित्वरूपं गुणं कुर्वित्यर्थः ॥२॥

चन्द्र प्रायश्चित्त इति। अपुत्र्या तनूरिति विशेषः। पुत्रस्य निमित्तं पुत्र्या। पुत्राच्छ च [पा ५. १. ४०] इति यत्। न पुत्र्या अपुत्र्या पुत्रस्य निमित्तं या न भवतीत्यर्थः ॥३॥

सूर्य प्रायश्चित्त इति। अपशव्या तनूरिति विशेषः। अपशव्येति—पशूनां गोमहिष्यादीनां यन्निमित्तं ताभ्यो वा हिता न भवति। तस्य निमित्ताधिकारे गोद्व्यचः इत्यादिना [पा ५. १. ३९] यत् तस्मै हिताधिकारे उगवादिभ्य [पा ५. १. २] इति वा ॥४॥

अग्नि-वायु-चन्द्र-सूर्या इति। पूर्वैश्चतुर्भिर्मन्त्रैरग्न्यादयः प्रत्येकमभ्यर्थिताः। अनेन तु समुदितास्त एव प्रार्थ्यन्ते। ५॥

पतिगृहे जायापती त्रिरात्रं शयीयाताम्। ततस्त्रिरात्रादूर्ध्वं चतुर्थेऽहन्याज्यहोमे अग्ने प्रायश्चित्तिरित्यादयः पञ्च मन्त्रा विनियोक्तव्याः। तथा च सूत्रम् [खा गृ १. ४. १२]—ऊर्ध्वं त्रिरात्राच्चतसृभिराज्यं जुहुयादग्ने प्रायश्चित्तिरिति समस्य पञ्चमीं सम्पातानवनयन्नुदपात्र इति ॥

तत्र प्रथमोऽग्ने प्रायश्चित्तिरिति। एतदादिचतुर्णां मन्त्राणामग्निवायुचन्द्रसूर्याः क्रमेण देवताः। पञ्चमस्य तु पुनरग्न्यादयश्चत्वारोऽपि देवताः। निगदरूपत्वादेतेषां न छन्दःक्लृप्तिरस्ति। ऋचो यजूंषि सामानि निगदा मन्त्रा इति हि परिभाषितम्[2]।

1 A omits स्फोटयेति यावत्.	2 *Kāty. Śr.* 1. 3. 1

हे अग्ने अग्रणीत्वादिगुणयुक्त त्वं प्रायश्चित्तिः अस्मदुपार्जितस्य पापस्यापनेता। भवसीति शेषः। देवानामिन्द्रादीनां मध्ये त्वमेव प्रायश्चित्तिरसि। अग्नेः प्रायश्चित्तिरूपत्वं सर्वप्रायश्चित्ताहुतिमन्त्रेषु प्रसिद्धम्। यद्वा देवानां तत्सम्बन्धिपापानां प्रायश्चित्तिरसि। यत एवंविधोऽतः प्रायश्चित्तिर्भवेत्यर्थः। ब्राह्मणोऽहं त्वा त्वां नाथकामो नाथमात्मकामः[1] सन् उपधावामि उपगच्छामि। किमर्थमुपधावामीति चेदुच्यते। अस्या वध्वाः सम्बन्धिनी या पापी लक्ष्मीः पापीयसी अशुभसम्बन्धिनी लक्ष्मीरस्ति तामस्याः सकाशादपजहि अपघातय नाशयेत्यर्थः ॥१॥

एवं वायुचन्द्रसूर्यविषया व्याख्येयाः। त्रयाणामपि मन्त्राणामादौ वायो प्रायश्चित्ते चन्द्र प्रायश्चित्ते सूर्य प्रायश्चित्त इति क्रमेणोहित्वा पठितव्यम्। तथा पापी लक्ष्मीरित्यस्य स्थाने पतिघ्नी तनूरपुत्र्याऽपशव्येति चोहेत्। शिष्टं समानम् ॥२-४॥

पञ्चमं मन्त्रमाह—अग्निवायुचन्द्रसूर्या इति।

अत्र पूर्वमन्त्रोक्ता देवताः क्रमेण सम्बोध्यन्ते। तेषामेकवचनस्थाने बहुवचनत्वेनोहेत्। शिष्टं समानम् ॥५॥

इति विवाहाङ्गभूता मन्त्राः ॥

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥६॥

[ ऋ स १०. १८४. १ ; अ स ५. २५. ५ ; शा गृ १. २२. १२ द्रः ; गो गृ २. ५. ६ ; खा गृ १. ४. १५ ; जै गृ १. २२ ; आप म १. २२. १ ]

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति।
गर्भं ते अश्विनौ देवावा धत्तां पुष्करस्रजौ ॥७॥

[ ऋ स १०. १८४. २ ; अ स ५. २५. ३ ; गो गृ २. ५. ६ ; खा गृ १. ४. १६ द्रः ; आप म १. १२. २ ]

पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ।
पुमानग्निश्च वायुश्च पुमान् गर्भस्तवोदरे ॥८॥

[ शा गृ १. १७. ६ ; गो गृ २. ६. ३ ; पा गृ १. ६. ५ ; खा गृ २. २. १६ द्रः ]

1 B[1] नायककामः ; M[1] नाथकामः

पुमानग्निः पुमानिन्द्रः पुमान् देवो बृहस्पतिः ।
पुमांसं पुत्रं विन्दस्व तं पुमाननु जायताम् ॥९॥

[ गो गृ २. ६. ११ ; खा गृ २. २. २३ द्रः ]

विष्णुरित्यादिमन्त्रचतुष्टयस्य पुमानग्निरित्यन्तस्यानुष्टुप् छन्दो गर्भाधाने विनियोगो विष्णुरित्यादय आशास्यमाना देवताः ।

ते इति प्रत्येकमभिसम्बध्यते । हे वधु गम्ये[1] ते तव योनिं गर्भस्थानं विष्णुः वासुदेवः कल्पयतु प्रसवसमर्थां करोतु । त्वष्टा देवताविशेषः ते रूपाणि पिंशतु प्रकाशयतु । पिषिः संचूर्णनार्थोऽप्यनेकार्थत्वादत्र प्रकाशने वर्तते । वर्णव्यत्ययेन च षकारस्य शकारः । किञ्च गात्राणि प्रजापतिः आसिञ्चतु तामेव वा योनिम् । एतदुक्तं भवति—यावन्मात्रेण बीजेन गर्भो भवति तावन्मात्रमेव प्रक्षेपयत्वित्यर्थः । किञ्च धाता आदित्यः ते गर्भं पुत्रार्थं दधातु धारयतु पुष्णातु वा ॥६॥

पूर्वा अमावास्या सिनीवाली । सा प्रार्थ्यते । हे सिनीवालि अस्यां वध्वां गर्भं धेहि बन्ध्यतामपनय । तथा सरस्वति देवते त्वं गर्भं धेहि । किञ्च हे कन्यके गम्ये[1] ते तव अश्विनौ दस्रौ देवौ अमरौ गर्भं पुत्रम् आधत्तां कुरुताम् । किम्भूतावश्विनौ—पुष्करस्रजौ पद्मपुञ्जमालौ[2] ॥७॥

गर्भसम्भूतावपि सत्यां कदाचित् स्त्री नपुंसकं वा स्यात् । अतस्तन्निवृत्त्यर्थमाह पुमांसाविति । सापेक्षत्वाद् वाक्यस्य यथेत्येतदस्त्विवति क्रियापदञ्चाध्याहार्यम् । तेनायमर्थः सम्पद्यते ।—यथा पुमांसौ मित्रावरुणौ आदित्यप्रचेतसौ यथा च पुमांसौ अश्विनौ देववैद्यौ उभौ द्वावपि । यथा पुमानग्निः यथा च पुमान् वायुः । तथायं गर्भः प्रजननहेतुस्तवोदरे अस्त्वित्यर्थः ॥८॥

अत्रापि यथेत्येतदध्याहार्यम् । यत्तदोश्च नित्याभिसम्बन्धः । हे वधु यथा पुमानग्निः पुमानिन्द्रः पुमान् देवो बृहस्पतिः तथा तद्रूपप्रभावबुद्धिविभवसदृशं पुत्रं विन्दस्व—विद लाभे—लभस्व प्राप्नुहीति यावत् । किञ्च तम् अनु तस्य पुत्रस्य जातस्य पश्चाद् अन्योऽपि पुमान् पुत्रः तव जायताम् ॥९॥

इति भट्ट-गुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये प्रथमप्रपाठके
चतुर्थः खण्डः ॥

1 A omits गम्ये. 2 A पद्ममुक्तमालौ

अथ गर्भाधानाङ्गभूता मन्त्रा व्याख्यायन्ते ।

गर्भाधाने कर्मणि उपस्थाभिमन्त्रणे विष्णुर्योनिमित्ययं विनियुक्तः । तथा च सूत्रम् [खा गृ १. ४. १५] ऋतुकाले दक्षिणेन पाणिनोपस्थमालभेद्विष्णुर्योनिं कल्पयत्विति समाप्तायामिति ॥ रजोदर्शनप्रभृति षोडशरात्रपर्यन्तमृतुकालः । समाप्तायामिति सम्यगवस्थायां प्राप्तायामित्यर्थः । अवस्थायामिति आद्याश्चतस्रो रात्रीरेकादशीं च वर्जयित्वा शिष्टासु रात्रिष्विति तात्पर्यार्थः ।

पाठस्तु—विष्णुर्योनिमिति । अनुष्टुबस्य च्छन्दः । विष्ण्वादयो देवताः ।

विष्णुर्व्यापक एतन्नामको देवः ते तव योनिं रेतःप्रवेशनद्वारं कल्पयतु साधयतु । त्वष्टा देवः ते त्वयि सिक्तानि रूपाणि रेतोरूपोदकबिन्दून् पिंशतु अवयवीकरोतु । पिश अवयवे । शिरःपादादिरूपेण विकृतानि करोत्वित्यर्थः । सिक्तस्य रेतसो विक्रिया त्वष्ट्रधीना 'यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत् प्रजायत' इत्यादिश्रुतेः[1] । प्रजापतिः सर्वस्योत्पादको देवः आसिञ्चतु अस्मदुपाधिना रेतःसेकं करोतु । धाता जगत्कर्ता एतन्नामा देवः ते त्वयि गर्भं दधातु स्थापयतु ॥६॥

गर्भं धेहीत्यादिभिस्त्रिभिर्मन्त्रैः सम्भोगं कुर्यात् । तथा च सूत्रम् [खा गृ १. ४. १६] सम्भवेद् गर्भं धेहीति । सम्यगालोच्य मुहूर्तादि मिथुनीभवेदित्यर्थः[2] ।

तत्र प्रथमः—गर्भं धेहि सिनीवालीति । अनुष्टुबस्य च्छन्दः । सिनीवाल्यादयो देवताः ।

सिनीवाली नाम दृष्टचन्द्रामावास्या । हे सिनीवालि अमावास्याभिमानिनि देवि अस्यां वध्वां गर्भं धेहि स्थापय देहि वा । सरस्वति—सर इत्युदकनाम तद्वती नदी सरस्वती । यद्वा सरणं सरः प्रसरणवती[3] वाणी एतन्नामिके देवि अस्यां वध्वां गर्भं धेहि । अथवा जायैव सिनीवालीत्वसरस्वतीत्वभावनयोच्यते । तामेवाशास्ते । किं च ते त्वयि अश्विनौ देवौ गर्भमाधत्तां कुरुताम् । आङ्पूर्वो दधातिः करोत्यर्थः । कीदृशौ तौ—पुष्करस्रजौ स्वर्णकमलमाल्योपेतौ ॥७॥

अथ द्वितीयः—पुमांसौ मित्रावरुणाविति । अनुष्टुबस्य च्छन्दः । मन्त्रप्रतिपाद्या मित्रावरुणादयो देवताः ।

1 See *T. S.* 1. 5. 9. 1. 5. 26.
2 Rudraskanda on *Kh. Gṛ.*
3 B² प्रसववती

यथा मित्रादयः पुमांसः पुंस्त्वोपेता इति लोकवेदयोः प्रसिद्धास्तथा गर्भस्तवोदरे वर्तमानो जायतामित्यर्थः ॥८॥

अथ तृतीयः—पुमानग्निरिति । पूर्ववच्छन्दोदेवते ।

अग्न्यादयः प्रसिद्धाः । ते यथा पुमांसः तथा पुमांसं पुत्रं—पुत्रशब्दः स्त्रीपुरुषसामान्यवचनः—पुंस्त्वोपेतं पुत्रं विन्दस्व लभस्व । तमुत्पन्नमनु पुमानेव जायताम् उत्पद्यताम् ॥९॥

इति गर्भाधानाङ्गभूता मन्त्राः ॥

॥*॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणमन्त्रपर्वणि [1]चतुर्थः खण्डः[1] ॥*॥

1 B[2], G, M[1] have not indicated the ending of the third khanda with the Mantra इह धृतिः etc. at the proper place at p. 46. They read therefore तृतीयः खण्डः here.

## अथ प्रथमप्रपाठके पञ्चमः खण्डः

अयमूर्जावतो वृक्ष ऊर्जीव फलिनी भव ।
पर्णँ वनस्पते [1]नुत्त्वा नुत्त्वा[1] सूयतां रयिः ॥१॥

[ शा गृ १. २२. १० ; पा गृ १. १५. ६ ; गो गृ २. ७. ४ ; खा गृ. २. २. २५ द्र: ]

**अस्य मन्त्रस्यानुष्टुप् छन्दो हरितयुग्मोदुम्बरावलम्बने विनियोगः। स्त्री एव देवता।**

**हे कल्याणि अयं वृक्ष उदुम्बराख्य ऊर्जावत ऊर्जावान् प्रभूतफलतया[2] प्रशस्ततरो यतः अतस्त्वम् ऊर्जीव उदुम्बरीव फलिनी पुत्रिणी भव एधि। किञ्च हे वनस्पते उदुम्बर अस्यां प्रस्तुतायां स्त्रियां त्वया रयिः पुत्रधनं प्रसूयताम्। किमिव—पर्णमिव। किं कृत्वा—नुत्त्वा नुत्त्वा। णुद प्रेरणे। ईरयित्वेरयित्वेत्यर्थः ॥१॥**

पुमानग्निरित्यस्य गर्भाधाने विनियोग उक्तः[3]। स एव पुनः पुंसवने वधूनासिकायां न्यग्रोधशुङ्गारससेचने विनियुज्यते। तथा च सूत्रितम् [ खा गृ २. २. २३ ]—स्नातां संवेश्य दक्षिणे नासिकास्रोतस्यासिञ्चेत् पुमानग्निरिति ॥ स च मन्त्रो व्याख्यातः।

अथ सीमन्ताङ्गभूता मन्त्रा व्याख्यायन्ते। तत्रायमूर्जावत इत्यादीनां चतुर्णां मन्त्राणां सीमन्तोन्नयने विनियोगः। तथा च सूत्रम् [ खा गृ २. २. २५ ]—स्नातामहतेनाच्छाद्य हुत्वा पतिः पृष्ठतस्तिष्ठन्ननुपूर्वया फलवृक्षशाखया सकृत् सीमन्तमुन्नयेत्त्रिश्वेतया च शलल्याऽयमूर्जावतो वृक्ष इति ॥ अत्रायं विभागः—फलवृक्षशाखया अयमूर्जावत इत्यारभ्य कृणोमीत्यन्तेनोन्नयेत्। शलल्या च राकामहमित्यारभ्य रराणेत्यन्तेन केशानुन्नयेत्। अत्र फलवृक्षशाखयेति सामान्येनोक्तेऽपि ऊर्जावतो वृक्ष इति मन्त्रलिङ्गात् 'ऊर्ग्वा उदुम्बर' इति[4] श्रुतेरुदुम्बरशाखयेति गम्यते। अनुपूर्वयेति पूर्वोक्तन्यग्रोधशुङ्गाधर्मयुक्तयेत्यर्थः।

तत्र प्रथमः—अयमूर्जावत इति। अनुष्टुबस्य च्छन्दः। आशास्यमाना वधूर्देवता।

1 C ऽनु त्वाऽनु त्वा ; See Sāyaṇa.
2 B ०बलतया
3 See *Bhāṣya* under 1. 4. 9.
4 *T. S.* 2.1.1; *T. Br.* 1.1.3.10.

हे वधु ऊर्जावतः ऊर्जं बलं तत्साधनमन्नं वा तद्वत ऊर्जावत उदुम्बरस्येत्यर्थः। देवा वा ऊर्जं व्यभजन्त तत उदुम्बर उदतिष्ठदिति[1] श्रुतेरुदुम्बरस्योर्जावत्त्वम्। तस्य सम्बन्धी वृक्षोऽयं तव सीमन्तोन्नयनसाधन इत्यर्थः। वृक्षैकदेशभूतायां शाखायां वृक्षशब्दव्यवहारः। यत उक्तलक्षणोऽयमत ऊर्जीव उदुम्बरवृक्षशाखेव। सा यथा फलिनी तद्वत्त्वमपि फलिनी भव पुत्रादिफलवती भव। हे वनस्पते वनस्पत्यवयवशाखे त्वाऽनु त्वामनुसृत्यानुक्रमेण यथा पर्णं वर्तते तथैव त्वाऽनु त्वामनुसृत्य तव पर्णक्रमेणैव रयिः पुत्राख्यधनं सूयतां वध्वामुत्पद्यतामित्यर्थः ॥१॥

**येनादितेः सीमानं नयति प्रजापतिर्महते सौभगाय।**
**तेनाहमस्यै सीमानं नयामि प्रजामस्यै जरदष्टिं कृणोमि ॥२॥**

[ गो गृ २. ६. ६ द्रः ]

**अस्य मन्त्रस्य त्रिष्टुप् छन्दः। शरेण सीमन्तोन्नयने विनियोगः। अभिधीयमाना स्त्री देवता।**

**प्रजापतिर्जगतः स्रष्टा येन वीरतरेण अदितेः देवानां मातुः सीमानं सीमन्तं नयति नीतवान्। किमर्थम्—महते बृहते सौभगाय सुभगत्वाय। तेन शरेण अहं भर्ता अस्यै अस्याः प्रकृतायाः स्त्रियाः सीमानं सीमन्तं नयामि करोमि। किञ्च अस्यै अस्याः। चतुर्थ्यर्थे बहुलं छन्दसीत्यत्र [ पा २. ३. ६२ ] षष्ठ्यर्थे चतुर्थी वक्तव्येत्युपसंख्यानात् षष्ठ्यर्थे चतुर्थी। प्रजां पुत्रपौत्रादिकां जरदष्टिं जरापर्यन्तं दीर्घकालजीविनीं कृणोमि करोमि अहं भर्तेति सम्बन्धः ॥२॥**

अथ द्वितीयो येनादितेरिति। त्रिष्टुबस्य च्छन्दः। देवता पूर्ववत्।

पूर्वं प्रजापतिर्ब्रह्मा जगत्कर्ता महते सौभगाय सुभगस्य भावः सौभगं अत्यधिकाय सुभगत्वाय अदितेः स्वभार्याभूताया देवमातुः सीमानं केशानां विभागं येन साधनेन नयति अनयत् तेन साधनेनाहं भर्ता अस्यै अस्याः। षष्ठ्यर्थे चतुर्थी। सीमानं केशयोर्विभागं नयामि। तथा करणेन अस्यै अस्याः प्रजां पुत्रादिरूपां जरदष्टिं जरापर्यन्तव्याप्तिमतीं कृणोमि करोमि दीर्घायुषं करोमीत्यर्थः ॥२॥

1 *T. Br.* 1. 1. 3. 10

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः

सुभगा बोधतु त्मना ।

सीव्यत्वपः सूच्याऽछिद्यमानया ददातु वीरं

शतदायुमुख्यम् ॥३॥

[ ऋ स २. ३२. ४ ; अ स ७. ४८. १—सुहवा ; आप म २.११.१०—शतदायमुक्थ्य-मिति सर्वत्र । हि गृ २. १. ३ ; शा गृ १. २२. १२ ; गो गृ २. १. १ द्रः ]

अस्य जगती च्छन्दः पूर्णचात्रेण सीमन्तोन्नयने विनियोगः । राका देवता । या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राकेति विज्ञायते[1] । ताम् अहं भर्ता हुवे ह्वयामि । किम्भूताम्—सुहवां शोभनाह्वाम् । कया हुवे—सुष्टुती शोभनया स्तुत्या । सुष्टुतिशब्दात्तृतीयैकवचने सुपां सुलुगित्यादिना [पा ७. १. ३९] पूर्वसवर्णः । आह्वानप्रयोजनमाह—शृणोतु नः अस्माकं वचः । सा किम्भूता—सुभगा शोभनपुण्या । न केवलं शृणोत्वपि च बोधतु अवधारयतु । केन—त्मना आत्मनेत्यर्थः । मन्त्रेष्वाङ्यादेरात्मनः [ पा ६. ४. १४१ ] इत्यकारलोपः । स्वयमेवेत्यर्थः । सैव भूयः प्रार्थ्यते । अपः एतत् प्रजननकर्म पुत्रपौत्रादिसन्तानलक्षणं सीव्यतु सम्पादयतु । कया—सूच्या संघट्टनशीलया । किम्भूतया—अच्छिद्यमानया अभज्यमानया । किञ्च ददातु वीरं पुत्रम् । किम्भूतम्—शतदायुमुख्यं शतदायवः उदाराः प्रभूतदातारः तेषु मुख्यं प्रधानम् । ऋग्वेदे [२. ३२. ४]' पाठः शतदायमुक्थ्यमिति । यास्केन [ नि ११. ३. ३१ ] चैतत् पदं निरुक्तं वक्तव्यप्रशंसं प्रख्यातस्तुति-मित्यर्थः ॥३॥

अथ तृतीयो राकामहं सुहवामिति । जगत्ययम् । राका देवता ।

अहं भर्ता राकां—सम्पूर्णचन्द्रोपेता पौर्णमासी राकेत्युच्यते 'राका सम्पूर्णचन्द्रा स्यात् कलोनानुमतिः स्मृता' इति वचनात्—तां देवीं हुवे आह्वयामि केशोन्नयनार्थमित्यर्थः । कीदृशीं राकाम्—सुहवां शोभनाह्वानां सुष्टुतीं शोभनस्तुतिकाम् । सुभगा शोभनभाग्या सा नो हवं शृणोतु । श्रुत्वा च त्मना आत्मना स्वेच्छयैव बोधतु आह्वानं

1 See *Ait. Br.* 7. 11 ; *Ṣaḍviṃśa Br.* 4. 6 ; *Gopatha Br.* II. 1. 10.

प्रति गन्तव्यमिति बुध्यतामित्यर्थः। यद्वा आत्मना अस्मत्स्वनुग्रहयुक्तया बुद्ध्यागत्य बोधतु कर्तव्यतां बोधयतु। लुप्तण्यर्थेयम्। तथा कृत्वा अपः सीमन्तलक्षणं व्रतम्। अच्छिद्यमानया सीवनेन छेदमलभमानया सूच्या सूचीसदृश्या शलल्या सीव्यतु। पटद्वयं सीवनसमये यथा सूच्यायतमुपर्युपरि गच्छति तद्वदत्रापि सद्भावात् सीवनमुपचर्यते। तथा कृत्वा अस्यां वध्वां शतदायुमुख्यं दायुर्दानं शतसंख्याकदानवतां मध्ये मुख्यम्। अथवा पदद्वयम्—शतदायु शतदानं मुख्यं चेत्यर्थः। छान्दसो विभक्तिलोपः। कीदृशम्—वीरं वीर्योपेतं पुत्रं ददातु प्रयच्छतु ॥३॥[1]

यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि।
ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥४॥

[ ऋ स २. ३२. ५ ; अ स ७. ४८. २ ; तै स ३३. ११. ५ ;
हि गृ २. १. ३ ; आप म २. ११. ११ ; गो गृ २. ७. ८ द्रः ]

**अस्य जगती च्छन्दः। त्रिश्वेतया मेध्यशलाकया सीमन्तोन्नयने विनियोगः। राकैव देवता।**

**हे राके याः ते तव सुमतयः शोभनबुद्धयः। किम्भूताः—सुपेशसः सुरूपाः। किञ्च याभिः सुमतिभिः। दाश्वान् यजमानः। दाश्वान् साह्वान् मीढ्वांश्चेति [ पा ६. १. १२ ] निपातात्। तस्मै वसूनि धनानि ददासि प्रयच्छसि। ताभिः सुमतिभिरुपलक्षिता त्वम् अद्य अस्मिन्नहनि नः अस्माकम् उप समीपे आगहि आगच्छ। किम्भूता—सुमनाः प्रसन्नचेताः। किं कुर्वाणा—हे सुभगे सर्वलोकवल्लभे। सहस्राणि पुष्णातीति सहस्रपोषः पुत्रः। कर्मण्यण् [ पा ३. २. १ ]। तं तथाविधं धनधान्यसमृद्धं रराणा। रा दाने। ददानेत्यर्थः ॥४॥**

अथ चतुर्थः—यास्ते राके सुमतय इति। जगत्यस्य च्छन्दः। राका देवता।

हे राके पौर्णमासि कालाभिमानिनि देवते ते तव याः सुमतयः शोभनमतियुक्ताः सुपेशसः—पेश इति रूपनाम—शोभनरूपोपेताश्च सख्यः सन्ति। याभिः सहिता दाशुषे हविर्दात्रे यजमानाय वसूनि धनानि ददासि प्रयच्छसि। ताभिः सह अद्यास्मिन् कर्मदिने सुमनाः शोभनमनोयुक्ता सती नः अस्मानुपागहि उपागच्छ। किं कुर्वतीत्याह। हे सुभगे शोभनधने रराणा अभिमतं ददाना त्वं सहस्रपोषं त्वया दत्तं गवादिधनमपरिमितपोषं

1 Sāyaṇa's Bhāṣya on this Mantra in *Ṛv.* 2.32.4 differs considerably.

पुष्यन्ती। यद्वा सहस्रपोषं सहस्राणि पुष्णातीति सहस्रपोषः पुत्रस्तं रराणा ददाना त्वम् उपागहीति समन्वयः ॥४॥

किं पश्यसि प्रजां पशून् सौभाग्यं मह्यं दीर्घायुष्ट्वं पत्युः ॥५॥

[ गो गृ २. ६. १० ; खा गृ २. २, २७ ; जै गृ १. ७ द्रः ]

**यजुरिदमच्छन्दस्कम्। स्थालीपाकावेक्षणे विनियोगः। सैव स्त्री देवता। हे कल्याणकारिणि अस्मिन् स्थालीपाके किम् आत्मसम्बन्धित्वेन प्रजां पुत्रपौत्रसन्तानलक्षणां पशून् गोहस्त्यश्वमहिषादिलक्षणान् सौभाग्यं मह्यं मम पत्युः। पूर्ववत् षष्ठ्यर्थे चतुर्थी [ पा २. ३. ६२ ]। दीर्घायुष्ट्वं बहुकालजीवित्वं पश्यसि? एवं प्रश्नपूर्वकमभिहिता सती भर्तारमुत्तरमाह—सर्वं भवदुक्तं पश्यामीति ॥५॥**

किं पश्यसीति यजुर्मन्त्रः सीमन्ताङ्गकृसरस्थालीपाकदर्शने विनियुक्तः। तथा च सूत्रम् [ खा गृ २. २. २७, २८ ]—उत्तरघृतमवेक्षतीं पृच्छेत् किं पश्यसीति। प्रजामिति वाचयेदिति ॥

पाठस्तु—किम्पश्यसीति। अस्य यजुष्ट्वान्न च्छन्दोऽस्ति। प्रतिपाद्यमाना वधूर्देवता। किं पश्यसीति आज्यमवेक्षती पृष्टा ब्रूते। किमिति। उच्यते। अत्र स्थालीपाके प्रजां पुत्रादिकलक्षणां पशून् मह्यं मम। षष्ठ्यर्थे चतुर्थी। पत्युर्दीर्घायुष्ट्वमिति। दृश्यमानाज्यस्थालीपाकस्य प्रजादिसाधनत्वात् प्रजादिकमेव पश्यतीत्युपचर्यते ॥५॥

या तिरश्ची निपद्यते अहं विधरणी इति।
तां त्वा घृतस्य धारया यजे संराधनीमहम्।
संराधन्यै देव्यै देष्ट्र्यै स्वाहा[1] ॥६॥

[ आप म २. ८. ५ ; शा गृ ४. १८. १ ; हि गृ १. २. १८—निपद्यसे। गो गृ २. ७, १४, ४. ६. ६ ; खा गृ २. २. २६ द्रः ]

**यजुरिदमच्छन्दस्कं सोष्यन्तीहोमे विनियुक्तम्। अभिधीयमाना देवता। या देवता शुभे कर्मणि प्रस्तूयमाने[2] अहं विधरणी शुभफलविघटनशीला इत्येवं मन्यमाना तिरश्ची वाञ्छितफलविघ्नकर्त्री निपद्यते निष्पद्यते**

1 C omits स्वाहा. 2 A प्रस्थीयमाने ; B उपधीयमाने

**भवति अहं भर्ता तां त्वा त्वां देवतां यजे पूजयामि। किम्भूतां त्वा—संराधनीम्। राध साध संसिद्धौ। सम्यक् साधिनीं प्राणिनामिष्टफलस्य। कया—घृतस्य धारया आज्याहुत्या। संराधन्यै देव्यै देष्ट्र्यै। दिश अतिसर्जने। अतिसर्जनं च दानम्। इष्टफलदात्र्यै इत्यर्थः। स्वाहेति वाक्यशेषे। मन्त्रान्ते स्वाहाकार इति परिभाषितत्वात्॥६॥**

गर्भे प्रसवाय स्वस्थानात् प्रचलिते सोष्यन्तीहोमः कर्तव्यः। तथा च सूत्रम् [खा गृ २. २. २८]—प्रतिष्ठिते वस्तौ सोष्यन्तीहोम इति॥ या तिरश्चीत्यादिमन्त्रद्वयस्य विनियोगे च 'या तिरश्चीति द्वाभ्यामिति' हि सूत्रितम् [खा गृ २. २. ३०]।

तत्र प्रथमः—या तिरश्चीति। यजुष्ट्वादस्य च्छन्दो नास्ति। मन्त्रप्रतिपाद्या देवता।

या देवता गर्भनिर्गमनमार्गे तिरश्ची तिर्यग्गमना सती निपद्यते निपतनं करोति प्राप्नोति द्वारनिरोधं करोतीत्यर्थः। किं कुर्वती—अहं विधरणी गर्भस्य विधारयित्रीति प्रख्यापयन्तीत्यर्थः। तां विधरणीं त्वा त्वां संराधनीं प्रजायाः प्रसवरूपस्य फलस्य साधयित्रीं घृतस्य क्षरदाज्यस्य धारया अहं पतिर्यजे पूजयामि। संराधन्यै देव्यै संराधनयोग्यायै। देष्ट्र्यै दात्र्यै फलस्य। दिश अतिसर्जने। अतिसर्जनं दानम्। एवम्भूतायै देव्यै स्वाहेति शेषः। मन्त्रान्ते स्वाहाकारस्य नियतत्वात्॥६॥

विपश्चित् पुच्छमभरत्तद्धाता पुनराहरत्।
परेहि त्वं विपश्चित् पुमानयं जनिष्यते॥
असौ नाम॥७॥

[ गो गृ २. ७. १४ ; खा गृ २. २. २६ द्रः ]

**अस्य विराडनुष्टुप् छन्दः सोष्यन्तीहोमे विनियोगः। अभिधीयमाना देवता।**

**विपश्चिद् देवविशेषः। सः पुच्छं शिश्नं शिशूनाम् अभरत् हृतवान्। हृग्रहोर्भश्छन्दसीति [पा वा ३. १. ८४] हरतेर्हकारस्य भकारः। तत् पुच्छं विपश्चिता हृतं धाता प्रजापतिः पुनः आहरत् आहृतवान्। यत एवं हे विपश्चित् अतस्त्वं परेहि पर श्रेष्ठ इहि एहि आगच्छ अस्मिन् कर्मणि सन्निहितो भव। येन अयं पुमान् जनिष्यते उत्पत्स्यते। असौ नाम देवदत्ताभिधान इत्यर्थः।**

**अथ किमिदं सोष्यन्तीकर्माष्टाचत्वारिंशत्संस्कारेभ्योऽन्यत् संस्कारान्तरं स्वतन्त्रमाहोस्विदेषामेव संस्काराणामङ्गभूतम्। तत्र पूर्वस्मिन् पक्षेऽष्टाचत्वारिंशत्संस्कारप्रतिपादकं गौतमीयवचनं[1] विरुध्यते। द्वितीये तु कस्याङ्गमिति षष्ठ्यर्थो वक्तव्य इत्याशङ्कायां गर्भाधानप्रकरणादस्यैवाङ्गभूतमेतदिति द्रष्टव्यम् ॥७॥**

अथ द्वितीयः—विपश्चित् पुच्छमिति। उपरिष्टाद्बृहत्यस्य च्छन्दो विपश्चिद्धातारौ देवते।

विपश्चिदाख्यो देवः पुच्छं गर्भस्य पुच्छप्रदेशम् अभरत् आहरत्। यथा गर्भो न निर्गच्छेत् तथान्तराकर्षणमकरोदित्यर्थः। तत् पुच्छं धाता देवः पुनराहरत् आहृतवान्। पुनर्निर्गमाभिमुखमकरोदित्यर्थः। हे विपश्चिद्देव त्वं परेहि पराङ्मुखो गच्छ। किमर्थं परागमनमित्युच्यते। पुमान् पुंस्त्वोपेतोऽयं गर्भो जनिष्यते उत्पत्स्यते। असौ देवदत्तविष्णुशर्मेतिवन्नाम कुर्यादित्यर्थः। न च सोष्यन्तीनामककर्मणो गर्भाधानादिवत् संस्कारमध्ये परिगणनाभावादत्रास्य विनियोगो नोपपन्न इति वाच्यमस्यापि गर्भसंस्काररूपत्वाद्गर्भाधानादिष्वन्तर्भावाच्च ॥७॥

## इयमाज्ञेदमन्नमिदमायुरिदममृतम् ॥८॥

[ गो गृ २. ७. १६ ; खा गृ २. २. ३३ द्रः ]

**यजुरिदमच्छन्दस्कमङ्गुष्ठानामिकाभ्यां बालस्य व्रीहियवचूर्णप्राशने विनियुक्तमन्नदेवताकम्।**

**हे बालक इदं प्रत्यक्षम् अन्नम् इयम् आज्ञा प्रज्ञा प्रज्ञाहेतुत्वात्। तथा इदम् अमृतम् अनेन विधिना उपयुज्यमानम् अमरणधर्मि तवाऽस्त्विति शेषः ॥८॥**

अथ जातकर्माङ्गभूता मन्त्राः।

इयमाज्ञेत्येतद्यजुर्व्रीहियवपिष्टप्राशने विनियुक्तम्। तथा च सूत्रम् [ खा गृ २. २. ३४ ] अङ्गुष्ठेनानामिकया चादाय कुमारं प्राशयेदियमाज्ञेति ॥ यजुष्ट्वादस्य छन्दोविशेषो नास्ति। प्राश्यमन्नं देवता।

इयमश्यमानव्रीहियवपिष्टरूपा आज्ञा अलङ्घ्या अवश्यं प्राश्येत्यर्थः। आज्ञेत्यस्य नियतस्त्रीलिङ्गत्वात्तदुपजीव्येयमित्यस्य स्त्रीलिङ्गता। तथोत्तरत्रापि प्रतिनिर्देशापेक्षया निर्दिष्टानामादिष्टलिङ्गता। इदं व्रीहियवपिष्टम् अन्नम् अदनीयम्। शरीरोपचयद्वारेण हितकरमित्यर्थः।

1 See *Gautama Dharmasūtra* 8. 8.

तथेदमेव द्रव्यम् आयुः आयुर्वर्धकम्। किञ्चेदमेव अमृतम् अमरणसाधकम् अमृतवत् स्वादुभूतम्। यस्मादुक्तप्रकारेण प्रशस्तं तस्मादिदं भक्षयेदित्यर्थः ॥८॥

मेधां ते मित्रावरुणौ मेधामग्निर्दधातु ते।
मेधां ते अश्विनौ देवावा धत्तां पुष्करस्रजौ ॥९॥

[ गो गृ २. ७. २१ ; खा गृ २. २. ३४ द्रः ]

**अस्य मन्त्रस्यानुष्टुप् छन्दः पूर्ववत् सर्पिःप्राशने विनियोगो मित्रावरुणाग्न्यश्विनो देवताः।**

**हे कुमारक मेधां पठनश्रवणविषयां शक्तिं ते तव मित्रावरुणौ देवौ आधत्तां स्थापयताम्। आशिषि लोट् प्रार्थने वा। तथा मेधाम् अग्निः दधातु स्थापयतु। तथा अश्विनौ पुष्करस्रजौ पद्ममालाधारिणौ ॥९॥**

मेधां त इत्ययं कुमारस्यैव सर्पिःप्राशने विनियुक्तः। तथा च सूत्रम् [ खा गृ २. २. ३५ ]—सर्पिश्च मेधां त इति॥ चशब्द इयमाज्ञेत्यतः पूर्वं मेधां त इत्ययं मन्त्रः प्रयोक्तव्य इति ज्ञापनार्थः।

पाठस्तु—मेधां त इति। अनुष्टुबस्य च्छन्दः। मित्रावरुणादयो मन्त्रोक्ता देवताः।

हे कुमार ते तुभ्यं मित्रावरुणौ मित्रश्च वरुणश्च। देवताद्वन्द्वे चेत्यानङादेशः [ पा ६. २. १४१ ]। एवं नामानावहोरात्राभिमानिनौ देवौ मेधां धारणावती बुद्धिर्मेधा तामाधत्तां कुरुतामित्यर्थः। आङ्पूर्वो दधातिः करोत्यर्थः। अत्र द्विवचनसामर्थ्याद्व्यवहितोऽप्याधत्तामित्ययमनुषज्यते। तथा अग्निरपि ते त्वयि दधातु स्थापयतु। किञ्चाश्विनौ देवावपि ते तुभ्यं मेधामाधत्तां कुरुताम्। कीदृशौ तौ—पुष्करस्रजौ सुवर्णपद्ममालाभरणौ।

इयमाज्ञेत्येतावुक्तावुभौ मन्त्रावन्नप्राशने विनियोक्तव्यौ। तथा हि जातकर्माङ्गव्रीहियवपिष्टसर्पिःप्राशनविधायके सूत्रे[1] अङ्गुष्ठानामिकाभ्यामित्येव सिद्धे अङ्गुष्ठेनानामिकया चेति पृथङ्निर्देशस्ताभ्यामेवाङ्गुलीभ्यामन्नप्राशनं कर्तव्यमिति सूचनार्थम्। तथा चशब्दोऽप्येताभ्यामेव मन्त्राभ्यामन्नप्राशनमपि कर्तव्यमित्यवबोधनार्थं इति सूत्रभाष्यकृता रुद्रस्कन्देन व्याख्यातत्वात्[2] ॥९॥

1 *Kh. Gr.* 2. 2. 34     2 See Rudraskanda's *Bhāṣya*.

यत्ते सुसीमे हृदयं हितमन्तः प्रजापतौ ।
वेदाहं मन्ये तद्ब्रह्म माहं पौत्रमघं निगाम् ॥१०॥

[आ गृ १. १३. १—हृदये ; पा गृ १. ११. ६ ; आप म २. १३. ४—°मघं रुदम् ;
हि गृ २. ३. ८ । गो गृ २. ८. ४ ; खा गृ २. ३. ४ द्र:]

यत् पृथिव्या अनामृतं दिवि चन्द्रमसि श्रितम् ।
वेदामृतस्याहं नाम माहं पौत्रमघं रिषम् ॥११॥

[काठ स ७. १२ ; आप श्रौ ५. ६. ८ । गो गृ २. ४. ८ ; खा गृ २. ३. ४ द्र: ]

इन्द्राग्नी शर्म यच्छतं प्रजायै मे प्रजापती ।
यथायं न प्रमीयेत पुत्रो जनित्र्या अधि ॥१२॥

यददश्चन्द्रमसि कृष्णं पृथिव्या हृदयं श्रितम् ।
तदहं विद्वांस्तत् पश्यन् माहं पौत्रमघं रुदम् ॥१३॥

[ गो गृ २. ८. ७ ; खा गृ २. ३. ४ द्र: ]

यत्ते सुसीम इत्यादेर्यददश्चन्द्रमसीत्यन्तस्य मन्त्रचतुष्टयस्यानुष्टुप् छन्दः शिशोः प्रसवादारभ्य तृतीयस्यां ज्योत्स्नायां चन्द्रदर्शने विनियोगः। चन्द्रो देवता ।

हे चन्द्र यत् ते तव अन्तः मध्ये। किम्भूते—सुसीमे—सीमाऽत्र ज्योत्स्ना—शोभनज्योत्स्ने । पुनस्तदेव विशिनष्टि—प्रजापतौ प्रजानामानन्दजननत्वेन पत्यौ स्वामिनि हितं निहितमर्पितं हृदयं ब्रह्मस्थानम् । तद् ब्रह्म आत्मा तत्स्थानत्वात् । अहं मन्ये एवं वेद जानामि यस्मात्तस्मात् पौत्रं पुत्रसम्बन्धि अघं पापम् अनिष्टव्याधिवियोगविनाशादिरूपं मा निगां मा गच्छेयं मा प्राप्नुयामिति यावत् । एतदुक्तं भवति—यस्मादहं ब्रह्मवित् तस्मान्ममानिष्टसम्बन्धो नास्ति । अयं च प्रार्थनायां लिङर्थे लुङ्। माङि लुङित्यत्र [पा ३. ३. १७५] सर्वलकाराणामपवाद इति स्मरणात्[1] ॥१०॥

1 See *Kāśikā* on *P.* 3. 3. 175.

यत् पृथिव्याः अनामृतम् अमृतं दिवि द्युलोके चन्द्रमसि श्रितम् आश्रितम् अहं वेद जानामि अमृतस्य नाम। यत एवमतः अहं पौत्रम् अघं मा रिषम्—रिष गतौ[1]— रिषेयं गच्छेयमिति ॥११॥

मध्यस्थानत्वादिन्द्रस्यैव चन्द्रत्वमग्नेश्च पृथिवीत्वं चन्द्रमण्डलगतत्वेनोच्यते।[2] हे इन्द्राग्नी युवां मे मम तथा प्रजायै सन्तानाय शर्म सुखं [3]श्रेयःप्राकाम्यादिरूपं[3] तथा यच्छतं दत्तम्। दा दाने इत्यस्माल्लोण्मध्यमपुरुषद्विवचनान्तम्। किम्भूतौ—प्रजापती लोकपालकौ। यथा येन प्रकारेण अयं दारकः जनित्र्याः जनन्या अधि उत्सङ्गे स्थितो न प्रमीयेत—मीञ् हिंसायाम्—न हिंस्येत न विनश्येदित्यर्थः ॥१२॥

यत् अदः एतत् चन्द्रमसि कृष्णं लाञ्छनं पृथिव्याः स्वभूतं हृदयं श्रितम् आश्रितम्। तत् अहं विद्वान् तत्स्वरूपं जानन् तत् च पश्यन् ईक्षमाणः दृष्टवानस्मीति वाक्यशेषः। यतश्चैवम् अतः अहं पौत्रम् अघं मा रुदं मा रुद्यामित्यर्थः ॥१३॥

अथ निष्क्रमणाङ्गभूता मन्त्राः।

तत्र यत्ते सुसीम इति तिस्र उपस्थाने विनियुक्ताः। तथा च सूत्रितम्—[ खा गृ २. ३. ४ ] यत्ते सुसीम इति तिसृभिरुपस्थायेति।

तत्र प्रथमो यत्ते सुसीम इति। एतदादिमन्त्रचतुष्टयस्यानुष्टुप् छन्दः। चन्द्रमा देवता।

हे चन्द्र यत्ते तव हृदयं सुसीमे—सीमा मर्यादा—शोभनमर्यादोपेते प्रजापतौ प्रजानां पालयितरि ब्रह्मणि अन्तः तस्य मध्ये हितं निहितं तत्रोत्पन्नत्वात्। तथा हि श्रूयते—हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमाः इति[4]। चन्द्रमा मनसो जात इति[5] च। एवं वेद जानामि प्रजापतेरन्तस्तव हृदयमिति सम्यगवगच्छामीत्यर्थः। किञ्चाहं प्रजापतौ निविष्टं तव स्वरूपं तद्ब्रह्म मन्ये प्रजापत्याख्यं विराड्रूपं जानामि। सिसृक्षोः परमेश्वरस्य मन एव प्रजापतिरभवदिति मन्य इत्यर्थः। तथा च सामविधाने[6] श्रुतम्—ब्रह्म ह वा इदमग्र आसीत्। तस्य तेजोरसोऽत्यरिच्यत स ब्रह्मा समभवत्। स तूष्णीं मनसाऽध्यायत्तस्य यन्मन आसीत् स प्रजापतिरभवदिति। मनो हि प्रजापतिरिति

1 Not so in *Dhātupāṭha*
2 A, I omit the whole sentence.
3 A, I omit it.
4 *Ait. Ār.* 2. 4. 1
5 *Ṛv.* 10. 9. 13 etc.
6 *Sāmavidhāna Brāhmaṇa* 1.1.1-4

च। यस्मादेवं तस्मादहं पौत्रं पुत्रसम्बन्धि अघं दुःखं मा निगाम् मा प्राप्नुयाम्। लिङर्थे लुङ्। माङि लुङिति [ पा ३. ३. १७५ ] सर्वलकाराणामपवाद इति स्मरणात्[1]। माङ्योगादडभावः। यतः प्रजापतेर्मनोरूपं तव स्वरूपं ब्रह्मत्वेनावगच्छामि अतो मम मनस्यपि पुत्रवियोगादिजनितं दुःखं मा जायतामित्यर्थः ॥१०॥

अथ द्वितीयः—यत् पृथिव्या अनामृतमिति।

पृथिव्याः सम्बन्धि अनामृतम् अमृतममरणधर्मकं यद्वस्तु कार्ष्ण्यमस्ति। पृथिव्याः खल्वमृतं कार्ष्ण्यम्। कृष्णायां हि भूमावमृतत्वसाधनसौख्यादिसमृद्धिर्दृष्टा। तत् कार्ष्ण्यं दिवि द्युलोके चन्द्रमसि श्रितमाश्रितं वर्तते। अहं तस्यामृतस्य नाम कार्ष्ण्यमिति वेद जानामि। यस्मादेवं तस्मादहं पौत्रमघं मा रिषम्। रिष गतौ[2]—मा रिषेयं मा गच्छेयमित्यर्थः ॥११॥

अथ तृतीयः—इन्द्राग्नी शर्म यच्छतमिति।

हे इन्द्राग्नी प्रजापती प्रजानामुत्पन्नानां पालकौ युवां मे मम प्रजायै पुत्ररूपायै शर्म सुखं यच्छतं प्रयच्छतम्। यथा येन प्रकारेण जनयित्र्याः जनन्याः पुत्रोऽयं न प्रमीयेत न मृतो भवेत् तथा[3] शर्म यच्छतमित्यर्थः ॥१२॥

एवं रात्रौ चन्द्रमुपस्थाय प्रातस्तस्यैवोदकाञ्जलिः कर्तव्यः। तत्र यदद इत्ययं विनियुज्यते। तथा चोक्तम्—[ खा गृ २. ३. ४ ] यदद इत्यपामञ्जलिमवसिञ्चेदिति ॥

पाठस्तु—यददश्चन्द्रमसीति।

यददः कृष्णं लाञ्छनं दिवि चन्द्रमसि श्रितम् आश्रितं वर्तते। कीदृशमदः—पृथिव्यै हृदयम् षष्ठ्यर्थे चतुर्थी। पृथिव्या हृदयं यत् सारभूतं भूमेः सम्बन्धि यत् कार्ष्ण्यमस्ति तदेव चन्द्रमसि दृश्यत इत्यर्थः। तथा च तैत्तिरीये श्रूयते[4]—द्यावापृथिवी सहास्तामित्युपक्रम्य यदस्या यज्ञियमासीत्तदमुष्यामदधात्। तददश्चन्द्रमसि कृष्णमिति। तथाभूतं चन्द्रमसि वर्तमानं कार्ष्ण्यमहं विद्वान् जानन् तदेव पश्यन् ईक्षमाणः। दृष्टवानस्मीति वाक्यशेषः। तस्मादहं पौत्रं पुत्रसम्बन्धि अघं दुःखं मा रुदं रोदनं मा कार्षम् ॥१३॥

1 Guṇ makes the same remark. See *Kāśikā* on *P.* 3. 3. 175.

2 Guṇ also refers to रिष् in the sense of गति not recorded in *Dhātupāṭha*.

3 M[1] तयोः

4 *T. Br.* 1. 1. 3. 2-3

कोऽसि कतमोऽस्येषोऽस्यमृतोऽसि ।
आहस्पत्यं मासं प्रविशासौ ॥१४॥

स त्वाह्ने परिददात्वहस्त्वा रात्र्यै परिददातु रात्रि-
स्त्वाहोरात्राभ्यां परिददात्वहोरात्रौ त्वार्धमासेभ्यः
परिदत्तामर्धमासास्त्वा मासेभ्यः परिददतु मासा-
स्त्वर्तुभ्यः परिददत्वृतवस्त्वा संवत्सराय परिददतु
संवत्सरस्त्वायुषे जरायै परिददात्वसौ ॥१५॥

[ जै गृ १. ८ द्रः । गो गृ २. ८. १३ ; खा गृ २. ३. ६ द्रः ]

कोऽसि स त्वेत्येतौ यजुर्निगदावच्छन्दस्कावादित्यदेवताकौ नामकरणे विनियुक्तौ ।

असौ आमन्त्रणे । हे देवदत्त कोऽसि कस्त्वमसि भवसि । स्वरूपप्रश्नः । कतमोऽसि किंजातीयोऽसि । जातिपरिप्रश्ने डतमच्[1] । एषः असि भवसि । प्रत्यक्षनिर्देशः । अमृतोऽसि अविनाशी असि यतः अतस्त्वम् आहस्पत्यं अह्नां दिवसानां पतिः स्वामी अहस्पतिरादित्यः तस्यायमाहस्पत्यः । कोऽसौ— मासः तत्संक्रान्तिकृतः तं प्रविश प्राप्नुहि ॥१४॥

तस्य प्रवेशस्य यत् फलं तत् क्रमेण दर्शयन्नाह स त्वाह्न इति ।

अत्राप्यसावित्यामन्त्रणे । असौ देवदत्त सः अहस्पतिः त्वा त्वाम् अह्ने दिवसाय परिददातु समर्पयतु संवर्धनाय [illegible] ।

**युक्तम्। तथा च गृह्यस्मृतिः [गो गृ २. ८. ८ द्रः] दशरात्रे व्युष्टे पिता नाम करोति। सत्यम्। किन्त्वनियतकालत्वात् क्रमस्य वाऽविवक्षित्वादि-दमनवद्यम् ॥१५॥**

अधुना नामकरणाङ्गभूता मन्त्रा उच्यन्ते।

जननादूर्ध्वं दशरात्राच्छतरात्रात् संवत्सराद्वा नाम कुर्यादिति सूत्रितत्वात् [ खा गृ २. ३. ६ ]। शतरात्रसंवत्सरपक्षावुपजीव्य नामकरणात् पूर्वं निष्क्रमणमस्तीत्यवगन्तव्यम्। तत्र नामकरणाङ्गरूपे चक्षुराद्यभिमर्शने कोऽसीति मन्त्रस्य विनियोगः। तथा च सूत्रम् [ खा गृ २. ३. ६ ]—हुत्वा कोऽसीति तस्य मुख्यान् प्राणानभिमृशेदिति ॥ उदक्छिरसं कुमारं स्वाङ्के निधाय व्याहृतिभिर्हुत्वा कुमारस्य चक्षुषी श्रोत्रे नासिके आस्यञ्चाभि-मृशेदित्यर्थः[1]।

तत्र प्रथमो भागः—कोऽसि कतमोऽसीत्यादिः।

अस्य प्रश्नोत्तरस्य यजूरूपत्वाच्छन्दो नास्ति। आदित्यो देवता।

पिता कुमारस्य चक्षुराद्यवमृशन् ब्रूते। असावित्यामन्त्रणे। असौ हे कुमार त्वं कोऽसि को भवानसीति सामान्यप्रश्नः। कतमो किम्प्रकारो भवसीति विशेषप्रश्नः। किं जीवन् भवसि मरणोपेतो वा भवसीत्यभिप्रायः। एवं पृष्ट्वा स्वयमेवोत्तरं ब्रूते। एषोऽसि एष ब्राह्मणत्वादिजात्या शैशवाद्यवस्थया च युक्तस्त्वमसि। किञ्चामृतोऽसि अमरणधर्मा चिरं-जीव्यसि। यतस्त्वममृतोऽतस्त्वम् आहस्पत्यम्। अह्नः पतिरहस्पतिः स एवाहस्पत्यः। कीदृशं तम्—मासम्। मस्यते परिमीयते अन्तरिक्षं कालावयव इति वा मासः। तं कालावच्छेदकमा-दित्यमित्यर्थः। प्रविश। अथवाहस्पतिसम्बन्धिनं त्रिंशदहोरात्रसाध्यं मासं संक्रान्तिद्वयमध्य-कालात्मकं प्रविशेत्यर्थः। सन्ति मासाः पञ्चविधाः[2] सौरबार्हस्पत्यसावनचान्द्रनाक्षत्रभेदेन। यद्यप्यस्मिन् पक्षे मासस्यैव विशेष्यत्वात् प्राधान्यं प्रतीयते तथाप्यहरादिक्रमेण मासस्य पृथगभिधानादत्र विशेषणप्राधान्येन मासोपलक्षितं कालात्मकमादित्यं प्रविशेत्यर्थः ॥१४॥

1 See Rudra, *Kh. Gr.* 2. 3. 9.

2 Months of four denominations are well known viz. Cāndra, Sāvana, Saura and Nākṣatra: मासास्तु सावनः सौरश्चान्द्रो नाक्षत्र इत्यमी।—*Mādhavīyakārikā* 16 in *Kālanirṇaya.* Mādhava also quotes *Brahmasiddhānta*:
चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः।
एकराशौ रविर्यावत् कालं मासः स भास्करः।
सर्वर्क्षपरिवर्तैश्च नाक्षत्र इति चोच्यते ॥

द्वितीयभागः—स त्वाह्ने परिददात्विति ।

अत्राप्यसावित्यामन्त्रणे । असौ हे कुमार त्वा त्वां सोऽहस्पतिरादित्यः अह्ने अहरभिमानिदेवाय अहर्लक्षणकालावयवाय वा परिददातु प्रयच्छतु । एवमुत्तरत्रापि । तथाहरपि त्वा त्वां रात्र्यै परिददातु । रात्रिरपि त्वा त्वाम् अहोरात्राभ्यां परिददातु । अहोरात्रौ चार्धमासेभ्यः परिदत्ताम् । एवं संवत्सरपर्यन्तं योज्यम् । बहुवचनं तु संवत्सरावयवमासादिबाहुल्यविवक्षया । संवत्सरस्त्वायुषे जरायै परिददातु । संवत्सरः कालस्तदभिमानी वा देवः आयुषे बहुसंवत्सररूपचिरकालायुष्याय जरायै जरापर्यन्तायुष्याय त्वा त्वां ददातु । इत्येवमहरादिपारम्पर्यपरिदानोपन्यासः । कुमारस्य जरावस्थामध्ये एकस्मिन्नपि काले मरणं मा भूदित्यभिप्रायः । अत्रासाविति मन्त्रान्ते यत् सोष्यन्तीहोमे नामोक्तं तत् कुर्यात् ॥१५॥

अङ्गादङ्गात् संस्रवसि[1] हृदयादधि जायसे ।
प्राणन्ते प्राणेन सन्दधामि जीव मे यावदायुषम् ॥१६॥

[गो गृ २. ८. २१ ; खा गृ ३. ३. १३ द्रः]

अङ्गादङ्गात् सम्भवसि हृदयादधि जायसे ।
वेदो वै पुत्रनामासि स जीव शरदः शतम् ॥१७॥

[आ गृ १. १५. ११ ; गो गृ २. ८. २१ द्रः ; पा गृ १. १८. २ ; मा गृ १. १८. ६ ;
हि गृ २. ३. २ ; आप म २. ११. ३३ ; जै गृ १. ८—
आत्मा वै पुत्रनामासि । ]

अश्मा भव परशुर्भव हिरण्यमस्तृतं भव ।
आत्मासि पुत्र मा मृथाः स जीव शरदः शतम् ॥१८॥

[आ गृ १. १५. ३ ; हि गृ २. ३. २ ; मा गृ १. १७. ५ ; जै गृ १. ८ ।
गो गृ २. ८. २१ ; खा गृ २. ३. १७ द्रः । आप म २. १२. १]

पशूनां त्वा हिङ्कारेणाभिजिघ्राम्यसौ ॥१९॥

[आप म २. १२. १ ; हि गृ २. ४. १७ द्रः । गो गृ २. ८. २२ ; खा गृ २. ३. १४ द्रः]

1 C संश्रवसि

अङ्गादङ्गादित्यादिमन्त्रत्रयमनुष्टुप्छन्दस्कम् । पशूनामित्यादि यजुः । प्रवासागतस्य पितुर्ज्येष्ठस्य पुत्रस्योपनीतस्य वा हस्तेन मुखं पिधाय मूर्धघ्राणे विनियुक्तम् । हविर्भाक् स्तुतिभाग् वा मन्त्रप्रकाश्या देवता । तस्याश्चानुपादानात् प्रजापतिर्देवता ।

हे पुत्रक यः त्वं मे मम अङ्गात् अङ्गात् शिरोग्रीवादिभ्यः संस्रवसि संस्रुतोऽसि प्रधानधातुरूपतया निःसृतोऽसीत्यर्थः । तथा हृदयात् सर्वगात्रेभ्यः श्रेष्ठात् अधिजायसे उत्पन्नोऽसि । किमुक्तं भवति—उरस इत्यर्थः । ननु वर्तमाने लट्प्रयोगे संस्रुत उत्पन्न इति कथं भूतप्रयोगः । नायं लट् । किं तर्हि—लेट् । स च लिङर्थे स्मर्यते । लिङर्थश्च कालत्रयानवच्छिन्न इति भावः । तस्येत्थम्भूतस्य ते तव प्राणं मुखनासिकाभ्यां निःसरणरूपं वायुं प्राणेन एव संदधामि सततमविच्छिन्नं करोमि । तत्सन्धानात् त्वं जीव जीवतात् यावदायुषं वर्षशतं यावत् शतायुर्वै पुरुष इति श्रुतेः[1] ॥१६॥

यस्त्वं वेदोऽसि वै किल पुत्रनामा पुत्रनामाच्छादितः । स जीव शरदः शतमिति सम्बन्धः । वेदोऽसीति वेदस्याध्येता । गौर्वाहीकवद् गौणप्रयोगः । अत एव चोपनीतस्यैतत् कार्यशेषं पूर्वानुसारेण मन्तव्यम् ॥१७॥

हे पुत्र अश्मा पाषाण इव दृढो भव निर्व्याधिः । परशुर्भव परशुरिव छेदको भव न तु छेद्यः । तथा हिरण्यम् इव भव अस्तृतम् अन्यैस्ताम्रादिभिरपद्रव्यैराच्छादितं यत्न भवति । किमुक्तं भवति—स्वरूपादप्रच्युतो भवेत्यर्थः । आत्माऽसि अहमेव यस्त्वमपि सः । मा मृथाः मा मरिष्यसि । माङि लुङ् [पा ३. ३. १७५] । सर्वलकाराणामपवादः[2] । शरदः च शतं जीव जीवतात् ॥१८॥

असावित्येतदामन्त्रितम् । असौ हे पुत्र त्वा त्वाम् अहं पिता पशूनां गवां हिंकारेण हुङ्कृतेन अभिजिघ्रामि मूर्ध्नि चुम्बामि । यथा गावोऽरण्यादागताः स्वपुत्रकानाभिमुख्येन जिघ्रन्त्येवमहमपीत्यर्थः ॥१९॥

इति भट्ट-गुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये प्रथमप्रपाठके

पञ्चमः खण्डः ॥

1 See *Ait. Br.* 2. 17 etc.

2 *Kāśikā* on *P.* 3. 3. 175.

अङ्गादङ्गादित्यस्य मन्त्रत्रयस्य प्रवासादागतस्य पितुः कर्तव्ये पुत्रस्य मूर्धपरिग्रहे विनियोगः। तथा च सूत्रम् [ खा गृ २. ३. १३ ]—विप्रोष्यङ्गादङ्गादिति पुत्रस्य मूर्धानं परिगृह्णीयादिति ॥ विप्रोष्याङ्गादङ्गादिति वक्तव्ये ह्रस्वत्वेन श्रवणं बहुलवचनात् ।

तत्र प्रथमः—अङ्गादङ्गात् सम्भवसीति[1]। एतदादिमन्त्रत्रयस्यानुष्टुप् छन्दः प्रतिपाद्यः पुत्रो देवता 'या तेनोच्यते सा देवते'ति[2] न्यायात् ।

हे पुत्र त्वं पितुर्मम अङ्गादङ्गात् सर्वस्माच्छिरआद्यवयवात् सम्भवसि सम्भूतोऽसीत्यर्थः। पितुः सर्वाङ्गसारभूतरेतस उत्पन्नत्वात्। तथा हि बह्वृचारण्यके[3] श्रूयते—पुरुषो ह वा अयमादितो गर्भो भवति। यदेतद्रेतस्तदेतत् सर्वेभ्योऽङ्गेभ्यस्तेजःसम्भूतमिति ।

तदेवाह—हृदयादधिजायसे। हृदयोपलक्षितात् सर्वाङ्गादुत्पन्नो भवसि। यद्वा मातुर्हृदयाद्गर्भधारणप्रदेशादुत्पन्नोऽसि। यत एवमतस्ते प्राणं चक्षुरादिमुख्येन्द्रियं प्राणेनास्मदीयेनोक्तलक्षणेन संदधामि सन्धानं करोमि। मे ममाशिषा यावदायुषं ब्रह्मणा पुरुषस्य यावदेवायुर्दत्तं तावत्पर्यन्तं जीव जीवतात्। शतायुर्भवेत्यर्थः। शतायुः पुरुषः इति श्रुतेः[4] ॥१६॥

अथ द्वितीयः—अङ्गादङ्गात् संस्रवसीति ।

पूर्वार्धं व्याख्यातम्। संस्रवसि निर्गतोऽसीत्यर्थः। यत एवमतो मत्स्वरूपभूतस्त्वं पुत्रनामासि पुत्र इति नामभूतोऽसि। किञ्च त्वं वेदो वै। तत्साधकत्वात्तच्छब्देन व्यवहारो यजमानः प्रस्तर इतिवत्। स त्वं शरदः शतं शतसंवत्सरं जीव ॥१७॥

अथ तृतीयः—अश्मा भवेति ।

हे पुत्र त्वम् अश्मा भव अश्मवद्दृढो भव। परैरनभिभाव्यो भवेत्यर्थः। किञ्च त्वं परशुर्भव परशुर्यथा तीक्ष्णधारो भवति तद्वत्त्वमपि तीक्ष्णबुद्धिर्भव। यद्वा परशुर्यथा छिनत्ति तद्वद्द्विषश्छेत्ता[5] भवेत्यर्थः। तथा अस्तृतम् अहिंसितं विनाशरहितं हिरण्यं भव। उक्तलक्षणहिरण्यवद्धितरमणीयो भवेत्यर्थः। हे पुत्र त्वमात्मासि ममात्मस्वरूपो भवसि। अतो मा मृथाः मरणं न प्राप्नुयाः। किन्तु शतसंवत्सरं जीव ॥१८॥

1 Sāyaṇa reads संस्रवसि in the second Mantra of the Group.

2 *Sarvānukramaṇī* 2. 5.

3 *Ait. Ār.* 2. 4

4 *Śāṅkh. Br.* 11. 7 etc.

5 G तद्वद्विरोधिनश्छेत्ता

पशूनां त्वेत्ययं मन्त्रो मूर्ध्नोऽवघ्राणने विनियुक्तः । तथा च सूत्रम् [खा गृ २. ३. १४]—पशूनां त्वेत्यभिजिघ्रेदिति ॥ मूर्धानमिति शेषः ।

पाठस्तु पशूनामिति । अस्य यजुष्ट्वान्न च्छन्दः । देवता तु पूर्ववत् ।

असावामन्त्रणे । अत्र कुमारस्य नाम गृह्णीयात् । असौ विष्णुशर्मन् कुमार त्वा त्वां तव शिर इत्यर्थः । अभिजिघ्रामि अभिघ्राणनं करोमि । केन साधनेनेति तदुच्यते । पशूनां गवादीनां हिंकारेण—अनुकारशब्दोऽयम्—हिमिति शब्देन । गवादिकं यथा दूरादागतं वत्सं हिंकारं कुर्वन्मुहुः स्नेहादभिजिघ्रति तथेत्यभिप्रायः ॥१६॥

॥*॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणमन्त्रपर्वणि प्रथमप्रपाठके पञ्चमः खण्डः ॥*॥

---

## अथ प्रथमप्रपाठके षष्ठः खण्डः

आयमगात् सविता क्षुरेण ॥१॥

[अ स ६. ६८. १—आयमगन्। गो गृ २. २. १०; खा गृ २. ३. २० द्रः; जै गृ १. ११]

उष्णेन वाय उदकेनैधि ॥२॥

[अ स ६. ६८. १। आ गृ १. १७. ६; पा गृ २. १. ६; जै गृ १. ११—उदकेनेहि; आप म २. १. १—वायवुदकेनेहि। गो गृ २. ६. ११; खा गृ २. ३. २१]

आप उन्दन्तु जीवसे ॥३॥

[तै स १. २. १. १; आ गृ १. १७. ७; शा गृ १. २८. ६; आप म २. १. २; गो गृ २. ६. १२; खा गृ २. ३. २२; जै गृ १. ११]

विष्णोर्दँष्ट्रोऽसि ॥४॥

[गो गृ २. ६. १३; खा गृ २. ३. २३]

ओषधे त्रायस्वैनम् ॥५॥

[तै स १. २. १. १; आ गृ १. १७. ८; शा गृ १. २८. १२; गो गृ २. ६. १४; खा गृ २. ३. २४ द्रः]

स्वधिते मैनं हिंसीः ॥६॥

[वा स ४. १; तै स १. २. १. १; आ गृ १. १७. ६; गो गृ २. ६. १५; खा गृ २. ३. २५; हि गृ १. ६. १४; मा गृ १. २१]

येन पूषा बृहस्पतेर्वायोरिन्द्रस्य चावपत्।
तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय
दीर्घायुष्ट्वाय वर्चसे ॥७॥

[गो गृ २. ६. १६; खा गृ २. ३. २६; जै गृ १. ११ द्रः। हि गृ २. ६. १०; मा गृ १. २१. ६]

त्र्यायुषं तत्ते अस्तु त्र्यायुषम् ॥८॥

[अ स ५. २८. ७ द्रः ; वा स ३. ६२ । गो गृ २. ६. २१ ; खा गृ २. ३. २६ द्रः ।
जै गृ १. ११ द्रः । आप म २. ७. २ ; मा गृ १. १. २४]

अत्राद्याः सप्त यजूंषि । ऋचो यजूंषि सामानि निगदा मन्त्रा इति वचनात्[1] । अष्टम्युष्णिक् । सर्वाश्चूड़ाकरणे विनियुक्ताः प्रतिमन्त्रोपात्तसवित्रादिदेवताकाः ।

हे कुमार अयं नापितः सविता देवः क्षुरेण गृहीतेन आगात् आगतवान् । किमर्थम्—त्वद्भद्राकरणाय । आङ्व्यवहितोऽपि छन्दसि व्यवहिताश्चेति [पा १. ४. ८२] वचनात्तिङन्तेन सह संबध्यते ॥१॥

हे वायो त्वमपि उष्णेन उदकेन गृहीतेन कुमारशिरःप्लावनाय एधि एहि । छान्दसो हकारस्य धकारः । आगच्छेत्यर्थः ॥२॥

या वायुना आनीता आपः हे कुमार तास्त्वाम् उन्दन्तु क्लेदयन्तु । किमर्थम्—जीवसे जीवनाय चिरकालप्राणधारणायेत्यर्थः । जीवसे इति तुमर्थे सेसेनसे इत्यादिना [पा ३, ४, ९] असेप्रत्ययान्तः ॥३॥

हे क्षुर त्वं विष्णोः दंष्ट्रोऽसि दन्तोऽसि । दंष्ट्रा दन्ता विद्यन्तेऽस्येत्यर्शआदित्वादच्प्रत्यये रूपम् ॥४॥

हे ओषधे दर्भ त्रायस्व पालय एनं कुमारम् ॥५॥

स्वधितिरौदुम्बरः क्षुरः । तस्यामन्त्रणम् । हे स्वधिते एनं कुमारं मा हिंसीः मा दुःखयिष्यसीत्यर्थः ॥६॥

स्वधितेः पूर्वनियोगमाह । येन स्वधितिना पूषा देवः बृहस्पतेः वायोः इन्द्रस्य च आवपत् भद्राकृतवान् । वपिरत्र छेदनार्थः । तेन स्वधितिना ब्रह्मणा ब्रह्मभूतेन ते तव वपामि भद्राकरोमि । किमर्थम्—जीवातवे । एतद्व्याचष्टे—जीवनाय । अस्याप्यर्थौ दीर्घायुष्ट्वाय । वर्चसे तेजोविवृद्ध्यर्थञ्च ॥७॥

जमदग्नेः महर्षेः कश्यपस्य च महर्षेः अगस्त्यस्य च महर्षेः देवानाम् इन्द्रादीनां च यत् त्र्यायुषं त्रीणि आयूंषि बाल्युवस्थविरत्वानि । त्र्यायुषं वर्षशतावधीत्यर्थः । अचतुरादिसूत्रे [पा ५. ४. ७७] द्व्यायुषत्र्यायुषेत्यच्समासान्तस्य त्र्यायुषशब्दस्य निपातितत्वात् । यत्तदोर्नित्यसम्बन्धः । तत् हे भद्र ते तव अस्तु भवतु । आशिषि लोट् ॥८॥

1 *Kāty. Śr.* 1. 3. 1

अथ चूडाकरणसाधनभूता मन्त्रा उच्यन्ते ।

जननादितृतीये वर्षे चौलं कर्तव्यम् । तत्र वपनार्थमागतं नापितमायमगादित्यनेन प्रेक्षेत । तथा च सूत्रम् [ खा गृ २. ३. २० ]—हुत्वायमगादिति नापितं प्रेक्षेदिति ॥

पाठस्तु—आयमगादिति । एतदादीनां सप्तानां मन्त्राणां यजुष्ट्वाच्छन्दो न विद्यते । देवता तु तत्तन्मन्त्रव्याख्यानावसर एवाभिधास्यते । अस्य सविता देवता ।

अयं सविता कर्मणां प्रेरक एतन्नामको देवः क्षुरेण वपनसाधनेन तीक्ष्णधारेणायसेन शस्त्रेण विशिष्टः सन् आगात् आगच्छति । छन्दसि लुङ्लङ्लिट इति [ पा ३. ४. ६ ] वर्तमानार्थे लुङ् । एवं नापितस्य सवितृत्वभावनया क्रियमाणं कर्म फलवद्भवति ॥१॥

उष्णेनेत्युष्णोदकं प्रेक्षेत् । तथा च सूत्रितम् [ खा गृ २. ३. २१ ]—उष्णेनेत्युष्णोदकं प्रक्षेद्वायुं ध्यायन्निति ॥

पाठस्तु—उष्णेन वाय इति । वायुर्देवता ।

हे वायो देवते उष्णेनोदकेन एधि युक्तो भव । अथवा छान्दसो हकारस्य स्थाने धकारः शाखान्तरे[1] तथा पाठात् । एहि आगच्छ । अत्राप्युदकानयनस्य वाय्वधीनता । वृष्ट्युदके दृष्टत्वादुदकानेता वायुत्वेन भाव्यते पूर्ववत् । कर्मसाफल्याय वायुं ध्यायन्निति सूत्रकारेणाप्युक्तत्वात्[2] ॥२॥

आप उन्दन्त्वित्ययं केशोन्दने विनियुक्तः । तथा च सूत्रितम् [ खा गृ २. ३. २२ ]—आप इत्युन्देदिति ॥

पाठस्तु—आप उन्दन्त्विति । आपो देवताः ।

आप उष्णोदकानि कुमारस्य शिरोरोमाण्युन्दन्तु क्लेदयन्तु । किमर्थम्—जीवसे अस्य जीवनाय ॥३॥

विष्णोरित्ययमादर्शावेक्षणे विनियुक्तः । तथा च सूत्रम् [ खा गृ २. ३. २३ ]—विष्णोरित्यादर्शं प्रेक्षेदौदुम्बरं वेति ॥

पाठस्तु—विष्णोर्दंष्ट्रोऽसीति । मन्त्रप्रतिपाद्य आदर्शक्षुरो देवता ।

हे आदर्शक्षुर त्वं विष्णोर्देवस्य दंष्ट्रोऽसि दंष्ट्रवदतिनिर्मलस्तीक्ष्णधारश्च भवसि ॥४॥

1 *Av.*, *J. Gr.*, *Pā. Gr*, *Ā. Gr.*, *ĀP. M.* read एहि.　　2 See *Kh. Gr* 1. 3. 21.

ओषधय इति दर्भपिञ्जूलीः सप्तोर्ध्वाग्रा अभिनिधाय [ खा गृ २. ३. २४ ] केशैः संहत्य कुर्यात्।

पाठस्तु—ओषध इति। दर्भरूपौषधिर्देवता।

हे ओषधे दर्भमयि एनं वपनीयं माणवकं त्रायस्व पालय क्षुरकृतोपद्रवा-द्रक्षेत्यर्थः ॥५॥

स्वधित इत्यादर्शेन क्षुरेणौदुम्बरेण वेति [खा गृ २. ३. २५] केशान् संयोजयेदिति शेषः।

पाठस्तु—स्वधित इति। अस्य स्वधितिर्देवता।

हे स्वधिते छेदनसाधनशस्त्र एनं कुमारं मा हिंसीः हिंसितं मा कुरु ॥६॥

येन पूषेत्ययं केशवपने विनियुक्तः। तथा च सूत्रम् [ खा गृ २. ३. २६ ]—येन पूषेति दक्षिणतस्त्रिः प्राञ्चं प्रोहेदिति ॥ आदर्शेन क्षुरेणौदुम्बरेण वा क्षुरेण चूडाकरणे केशान् दर्भाग्र-युक्तांस्त्रिवारं समन्तकं संमार्जयेदित्यर्थः।

पाठस्तु—येन पूषा बृहस्पतेरिति। वपनसाधनः क्षुरो देवता।

येन क्षुरेणौदुम्बरेण वा पूषा पोषको देवः बृहस्पतिवाग्विन्द्राणां तेषां केशान् चूडाकरण-काले अवपत् वपनं कृतवान्। चशब्दोऽनुक्ताग्नयादिसमुच्चयार्थः। हे कुमार तेनोक्तरूपेण क्षुरेण ब्रह्मणा मन्त्रेण च। यद्वा ब्रह्मणा ब्रह्मभूतेन क्षुरेण वपामि। किमर्थमिति चेदुच्यते। जीवातवे जीवनाय। जीवेरातुरित्यातुप्रत्ययः [ उणादि ८२ ]। प्राणधारण-रूपस्य जीवनस्य पृथङ्निर्देशादत्र भोगविशिष्टं जीवनं जीवातुशब्देनोच्यते। किञ्च जीवनाय प्राणधारणाय। न केवलं तावन्मात्रायापि तु दीर्घायुष्ट्वाय अत्यन्तचिरकालजीवनाय। अथवा जीवातुप्रभृतीनां त्रयाणामपि पदानां परस्परं व्याख्येयभावोऽवगन्तव्यः। वर्चसे तेजोऽभि-वृद्धयर्थञ्च ॥७॥

त्र्यायुषमिति मूर्धानं परिगृह्य जपेत्। सूत्रमप्येतदेव [खा गृ २. ३. २८]।

पाठस्तु—त्र्यायुषं जमदग्नेरिति। अस्यायुषः प्रार्थ्यमानत्वादायुरेव देवता कुमारो वा आयुषस्तदर्थत्वात्।

अत्र यच्छब्दः सर्वत्रानुषज्यते। जमदग्नयादीनां देवतानां यत् त्र्यायुषं त्रीण्यायूंषि बाल्ययौवनवार्धकावस्थानेनावच्छिन्नानि यस्मिन् तत्तथोक्तम्। हे कुमार तत् त्र्यायुषं ते अस्तु तव भवतु। अचतुरेत्यत्र सूत्रे [पा ५. ४. ७७] द्व्यायुषत्र्यायुषेति निपातनात् त्र्यायुषमिति रूपसिद्धिः ॥८॥

अग्ने व्रतपत इत्यादेर्मन्त्रगणस्य भूर्भुवः स्वरों सुश्रवः सुश्रवेत्येवमन्तस्य यजुर्निगदश्छन्द उपनयनहोमे विनियोगः। प्रतिमन्त्रोपात्तैव देवता।

अग्ने व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तच्छकेयम्।
[1]तेनर्ध्यासमिदमहमनृतात् सत्यमुपैमि स्वाहा ॥९॥

[ वा स १. ५ ; तै स १. ५. १०. ३ प्रः ; मै स ४. ६. २४ प्रः। हि गृ १. ७. ८ द्रः।
गो गृ २. १०. १६ ; खा गृ २. ४. ७ ; जै गृ १. १२ द्रः ]

उपनीयमानो माणवकोऽग्निं प्रार्थयते। हे अग्ने। किम्भूत—व्रतपते शास्त्रीयस्य नियमस्य पालयितः। यत् व्रतम् उपनयनाख्यं चरिष्यामि अनुष्ठास्यामि तत् व्रतं ते तुभ्यं प्रब्रवीमि कथयामि वेदयामीति यावत्। तेन तत् व्रतम् अहं त्वत्प्रसादाच्चरितुं सुखेन शकेयम् शक्नोमि। व्रतचरणस्य फलमाह—तेन उपनयनव्रतेन करणभूतेन अहम् ऋध्यासम्। ऋधु वृद्धौ। ऋद्धिमध्ययनलक्षणां प्राप्नोमि। इदं व्रतम्। अहम् उपैमि उपगच्छामि। किम्भूतम्—सत्यम् सत्यवचनरूपम्। अनृतात् अलीकवचनान्निर्गत्य। एतदुक्तं भवति—योऽहं प्रागुपनयनात् कामचारवादभक्ष आसं सोऽहमधुना परित्यक्तानृतवादः सत्यभूतमिदं व्रतं चरिष्यामि। परिग्रहीष्यामीत्यर्थः। स्वाहेति हविरभिधानम्।

उत्तरेऽपि चत्वारो मन्त्रा अनेनैव व्याख्याताः। एतेषामसाधारणो विशेषो लिख्यते। साधारणस्तु पूर्वेण तुल्यः ॥९॥

अथोपनयनाङ्गभूता मन्त्रा व्याख्यायन्ते। तत्राग्ने व्रतपत इत्यादिमन्त्रपञ्चकेन उपनयने माणवकं हावयेत्। कुशलीकृतमलंकृतमहतेनाच्छाद्य हुत्वाग्ने व्रतपते इति सूत्रकारः [ खा गृ २. ४. ७ ]। पञ्चस्वपि मन्त्रेषु लिङ्गैक्यात् पञ्चभिरित्यवगम्यत इत्यभिप्रायेण संख्यां नोक्तवान्।

तत्र प्रथमः—अग्ने व्रतपत इति। एतदादिमन्त्रपञ्चकस्य यजुर्निगदरूपत्वान्न च्छन्दो विद्यते। अस्याग्निर्देवता।

हे अग्ने अग्रणीत्वादिगुणविशिष्ट व्रतपते। व्रतमिति कर्म नाम। सर्वेषां कर्मणां पालक देव त्वमुक्तलक्षणः। अतोऽहं व्रतं चरिष्यामि उपनयनाख्यं कर्मानुष्ठास्यामि। तत्ते प्रब्रवीमि। ईदृशमनुष्ठास्यामीति ते तव प्रकर्षेण कथयामि। यतो ब्रवीम्यतस्तत् कर्म शकेयम् कर्तुं शक्तो भूयासम्। एवमनुज्ञापूर्वकमनुष्ठिते कर्मणि शक्तिर्जायते। किञ्च तेन

1 Sāyaṇa explains तेन राध्यासम्.

त्वदनुज्ञातेन कर्मणा राध्यासम् समृद्धो भूयासम्। समृद्धिरत्र भाव्यध्ययनलक्षणा विवक्षिता। अहं व्रतकर्ता अनृतात् कामचारवादभक्षादिरूपादितः पूर्वकालीनाद्वियुक्तः सन्निदमनुष्ठीयमानं सत्यमुक्तवैलक्षण्येन सत्यभूतं व्रतमुपैमि प्राप्नोमि। यद्वा इदमिदानीमह-मनृतादनृतभूतात् क्रियाकलापात् [1]सत्यं साध्यं[1] फलमुपैमि। स्वाहेति हविरभिधानम्। हविर्ददामीति शेषः ॥६॥

वायो व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तच्छकेयम्।
तेनर्ध्यासमिदमहमनृतात् सत्यमुपैमि स्वाहा ॥१०॥

[मै स ४. ६. २४ प्रः। गो गृ २. १०. १६; जै गृ १. १२ द्रः]

सूर्य व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तच्छकेयम्।
तेनर्ध्यासमिदमहमनृतात् सत्यमुपैमि स्वाहा ॥११॥

[मै स ४. ६. २४; गो गृ २. १०. १६ द्रः; जै गृ १. १२—आदित्य व्रतपते]

चन्द्र व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तच्छकेयम्।
तेनर्ध्यासमिदमहमनृतात् सत्यमुपैमि स्वाहा ॥१२॥

[कौशिकसूत्र ५६. ७। गो गृ २. १०. १६ द्रः]

व्रतानां व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तच्छकेयम्।
तेनर्ध्यासमिदमहमनृतात् सत्यमुपैमि स्वाहा ॥१३॥

[मै स ४. ६. २४; तै ब्रा ३. ७. ४. ८। गो गृ २. १०. १६; जै गृ १. १२ द्रः]

**व्रतपतिः इन्द्रः गृह्यासंग्रहकारवचनात्[2] 'तस्मात् सर्वव्रतान्तेषु चरुरैन्द्रो विधीयत' इति ॥१०-१३॥**

एवमुत्तरेष्वपि चतुर्षु मन्त्रेषु उक्तमन्त्रगताग्ने इत्यामन्त्रणस्थाने व्रतपत इत्यादिमन्त्रशेषेण सह वायो चन्द्रादित्य व्रतानां व्रतपत इति पदचतुष्टयं क्रमेण प्रयुज्य पाठ्या अर्थाश्चाव-बोद्धव्याः। देवतास्तु तत्तन्मन्त्रे संबोध्यमानाः स्पष्टाः। व्रतपतिरितीन्द्र उच्यते 'तस्मात् सर्वव्रतान्तेषु चरुरैन्द्रो विधीयत' इति गृह्यासंग्रहवचनात्[2] ॥१०-१३॥

1 B[1] omits साध्यं; M[1] reads सम्यग्वा.

2 *Gobh. Gṛhyāsaṃgraha* 2. 45 (Bibl. Ind., p. 853).

आगन्त्रा समगन्महि प्र सुमर्त्यं युयोतन ।
अरिष्टाः सञ्चरेमहि स्वस्ति चरतादयम् ॥१४॥

[गो गृ २. १०. २० ; खा गृ २. ४. ११ द्रः ; जै गृ १. १२ ; आप म २. ३. १ ; मा गृ १. २२. २]

अस्यानुष्टुप् छन्दः । आचार्यो ब्रह्मचारिणं पश्यन् जपति ।

हे अग्न्यादयः यूयमेनमुपनीयमानं सुमर्त्यं शोभनमनुष्यं प्रयुयोतन प्रकर्षेण मिश्रयत अस्माभिः सह इत्येतत् प्रार्थ्यते । तथा प्रयुयोतन यथाऽनेन ब्रह्मचारिणा आगन्त्रा आगमनशीलेन वयं समगन्महि साङ्गत्यमनुभवेम । किञ्च अरिष्टाः । रुष रिष हिंसायाम् । न रिष्टं हिंसात्मकमसुखं युष्मत्प्रसादेनेति वयमरिष्टाः । अनेन ब्रह्मचारिणा सह सञ्चरेमहि सङ्गता गच्छेम सम्यग् ब्रह्म वा भक्षये । किञ्च स्वस्ति अविनाशी ब्रह्मचारी चरतात् मया सह गच्छतु ब्रह्म वा भक्षयत्वित्यर्थः । चर गत्यर्थे भक्षणे च ॥१४॥

आचार्यः कुमारमग्नेरुत्तरत उदङ्मुखमवस्थाप्याञ्जलिं कारयित्वा तत उपरि स्वयमप्यञ्जलिं कुर्यात् । ततः कश्चिद्ब्राह्मण आचार्यायोदकाञ्जलिं पूरयेत् । तथा च सूत्रम् [ खा गृ २. ४. १ ]—आगन्त्रेति जपेत् प्रेक्षमाण इति ।

पाठस्तु—आगन्त्रा समगन्महीति । अनुष्टुबस्य च्छन्दः । अग्न्यादयो देवताः । ता एव सम्बोध्यन्ते ।

हे अग्न्यादयो युष्मत्प्रसादाद् वयम् आचार्या आगन्त्रा उपनयार्थमागच्छता माणवकेन समगन्महि संगच्छेमहि । तदर्थं मर्त्यं मनुष्यं माणवकं सु सुष्ठु प्रयुयोतन प्रयोज्यास्माभिः सह मिश्रयत । बहुवचनं पूजार्थम् । तथा कृते वयं माणवकेन सङ्गता अरिष्टाः—रिष हिंसायाम्—अन्यैरहिंसिताः सन्तः सञ्चरेमहि सम्यक् चरेम वेदाभ्यासं सम्यक् करवामेत्यर्थः । किञ्चायं माणवकः स्वस्ति—अविनाशनामैतत्—अविनाशं यथा तथा चरतात् । अध्ययनमनुतिष्ठत्वित्यर्थः ॥१४॥

अग्निष्टे हस्तमग्रहीत् सविता हस्तमग्रहीदर्यमा
हस्तमग्रहीन्मित्रस्त्वमसि कर्मणाग्निराचार्यस्तव ॥१५॥

[ आप म २. ३. ४ ; जै गृ १. १२—हस्तमग्रभीत् ; गो गृ २. १०. २० द्रः ]

आचार्यो ब्रह्मचारिहस्तं गृह्णन्नाह । हे ब्रह्मचारिन् योऽयं तव हस्तो

**मया गृहीतस्त्वं हस्तं पूर्वं ते अग्निः सविता अर्यमा च अग्रहीत गृहीतवान् यतः अतः अनेन कर्मणा गुरुशुश्रूषालक्षणेन मित्रः मित्रं प्रियहितकारी। छान्दसो लिङ्गव्यत्ययः। मम त्वम् असि भवसि भवेत्यर्थः। अग्निः च भगवान् तव आचार्यः गुरुः ॥१५॥**

अग्निष्ट इत्यनेन ब्रह्मचारिणो हस्तमाचार्यो गृह्णीयात्।

पाठस्तु—अग्निष्टे हस्तमिति। यजुर्निगदत्वान्न च्छन्दोऽस्ति। अग्न्यादयो देवताः।

आचार्यो माणवकहस्तं गृह्णन् ब्रूते। हे माणवक ते तव हस्तं नाहं गृह्णामि किन्तु अग्निर्देवोऽग्रहीत् गृहीतवान्। तथा सवित्रादिष्वपि योज्यम्। किञ्च हे माणवक त्वं कर्मणा अस्मच्छुश्रूषालक्षणेनास्माकं मित्रोऽसि सखीभूतोऽसि। यद्वा कर्मणा मित्रोद्देशककर्मानुष्ठानेन त्वमपि मित्र आदित्योऽसि। तथाविधस्य तवाचार्योऽग्निर्नाहम्। अस्मद्रूपेणाग्निरेव तवोपदिशतीत्यर्थः ॥१५॥

## ब्रह्मचर्यमागामुप मा नयस्व ॥१६॥

[ गो गृ २. १०. २१ ; जै गृ १. १२ ; पा गृ २. २. ६ ; आप गृ ४. ११. १ ]

**हे गुरो ब्रह्मचर्यं मैथुननिवृत्तिम् अहम् आगाम् गतवान् उपनयनाधिकारी सम्पन्नो यतोऽतो मा माम् उपनयस्व आत्मसमीपं मां प्रापयेत्यर्थः १६॥**

आचार्यो ब्रह्मचर्यमागामुप मा नयस्वेति माणवकं वाचयेत्। सूत्रमप्येतदेव[1]।

पाठोऽप्ययमेव ब्रह्मचर्यमागामुप मेति। यजुरिदम्। आचार्यो देवता।

हे आचार्य अहं ब्रह्मचर्यं ब्रह्म वेदः तस्य चर्यं चरणमनुष्ठानम्। अत्र तदधिकारसाधनं व्रतं तेनोच्यते। तदागाम् आप्तः[2] कामचारभक्षणादिकं परित्यक्तवानस्मि। अतो मा माम् उपनयस्व तव समीपं प्रापयाध्ययनार्थम् ॥१६॥

**एवमभिहितो ब्रह्मचारिणाचार्यस्तस्य नामधेयं पृच्छति।**

## को नामासि ॥१७॥

## असौ नामास्मि ॥१८॥

[वा स ७. २६ ; शा गृ २. २. ४ ; गो गृ २. १०. २२ ;
खा गृ २. ४. १२ ; आप म २. ३. २७, २८ ]

1 See Rudraskanda on *Kh. Gṛ.* 2. 4. 10.  2 M[1] आगतवानस्मि

**किंनामा भवसि ॥१७॥**

**देवदत्तनामाऽहमित्यर्थः ॥१८॥**

उपनयनार्थं गुरुं प्रार्थयमानो माणवकस्तेनैव को नामासीति पृष्टः स्वनाम ब्रूयात्। तथा च सूत्रम् [ खा गृ २. ४. १२ ]—को नामासीत्युक्तो देवताश्रयं नक्षत्राश्रयं वाभिवादनीयं नाम ब्रूयादसावस्मीति ॥ देवताश्रयं स्वजन्मनक्षत्रं यद्दैवत्यं तद्देवताश्रयमाग्नेय इतिवत्। नक्षत्राश्रयं स्वजन्मनक्षत्राश्रयमाश्विन इतिवत्। अभिवादनीयमिति विष्णुशर्मेतिवत्।[1]

पाठस्तु—को नामास्यसाविति। यजुरिदम्। सम्भाष्यमाणमाणवको देवता।

हे माणवक त्वं को नामासि किंनामा भवसि। एवं पृष्टः असौ नामास्मि आग्नेयो विष्णुशर्माहमाश्विनो विष्णुशर्माहमिति ब्रूयात् ॥१७॥[2]

देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो
हस्ताभ्यां हस्तं गृह्णाम्यसौ ॥१९॥

[ गो गृ २. १०. २६—गृभ्णाम्यसौ ; खा गृ २. ४. १३ द्रः ]

**अनेन मन्त्रेणोत्सृज्यापामञ्जलिमाचार्यो दक्षिणेन पाणिना ब्रह्मचारिणो दक्षिणपाणिं साङ्गुष्ठं गृह्णाति [ गो गृ २. १०. २६ ]।**

**असौ देवदत्तशर्मन् ते तव हस्तं सवितुः देवस्य प्रसवे अभ्यनुज्ञाने सति अश्विनोः देववैद्ययोः बाहुभ्यां पूष्णः च देवस्य हस्ताभ्याम् अहमाचार्यः पाणिना गृह्णामि ॥१९॥**

देवस्य त इत्ययमाचार्यस्य माणवकहस्तग्रहणे विनियुक्तः। तथा च सूत्रम् [ खा गृ २. ४. १३ ]—उत्सृज्यापो देवस्य त इति दक्षिणोत्तराभ्यां हस्ताभ्यामञ्जलिं गृह्णीयादाचार्य इति ॥

पाठस्तु—देवस्य त इति। यजुरिदम्। मन्त्रप्रतिपाद्यमाना देवता।

असावित्यामन्त्रणे। हे माणवक ते तव हस्तं सवितुः प्रेरकस्य देवस्य प्रसवे अनुज्ञायां सत्याम् अश्विनोर्बाहुभ्यां पूष्णः पोषकस्यैतन्नामकस्य देवस्य हस्ताभ्यां कराभ्यां गृह्णामि। असावित्यत्र माणवकस्योक्तनाम गृह्णीयात् ॥१८॥

1 See Rudra on *Kh. Gṛ.* 2. 4. 12.

2 Guṇ explains the Mantra in two separate parts: को नामासि and असौ नामास्मि.

सूर्यस्यावृतमन्वावर्तस्वासौ ॥२०॥

[ अ स १०. ५. ३७ ; वा स २. २६, २७ ; काठ स ५. ५ ; ३२. ५
—अन्वावर्ते ; गो गृ २. १०. २७ ; खा गृ २४. १४ ]

प्राणानां ग्रन्थिरसि मा विस्रसोऽन्तक इदं ते परिददाम्यमुम् ॥२१॥

[ शा गृ ३. ८. ५ ; मा गृ १. २२. ६ ; गो गृ २. १०. २८ ;
खा गृ २. ४. १५ ; जै गृ १. १२ द्रः] ।

अथैनं प्रदक्षिणमावर्तयति [गो गृ २. १०. २७] ।

असौ हे विष्णुशर्मन् सूर्यस्य आवृतम्—आवृत् सम्पदादिषु पाठात् क्विप् ताम्—अन्वावर्तस्व। एतदुक्तं भवति—यावद् भगवतो भानोः स्थितिस्तावत्त्वमपि तिष्ठेत्यर्थः ॥२०॥

आचार्यो दक्षिणेन पाणिना दक्षिणमंसमन्ववमृश्यानन्तर्हितां नाभिमभिमृशेत् प्राणानां ग्रन्थिरसीति [गो गृ २. १०. २८] ।

हे नाभे अस्य ब्रह्मचारिणः त्वं मा विस्रसः मा विस्रंसिष्यसि मा स्वस्थानाद्विचलिष्यसीत्यर्थः। यस्त्वं प्राणानां देहधारकाणां ग्रन्थिः प्रतिबन्धः असि भवसि। किञ्च हे अन्तक यम इदम् अस्य शरीरम् अमुं च ब्रह्मचारिणं ते तव परिददामि। ददातिरत्र समर्पणे। एतदुक्तं भवति—तव समर्पित एष रोग-जरा-मरणदुःखैर्माभिभूयत इति ॥२१॥

सूर्यस्येति प्रदक्षिणमावर्तयेत्। सूत्रमप्येतदेव [ खा गृ २. ४. १४ ]। तस्याञ्जलिं गृह्णन्नेव यावत् प्राङ्मुखः स्यात् तावदावर्तयेदित्यर्थः।

पाठस्तु—सूर्यस्यावृतमिति। छन्दोदेवते पूर्ववत्।

हे असौ माणवक त्वं सूर्यस्य आवृतमावर्तनमनुसृत्य आवर्तस्व। असाविति पूर्ववत् ॥१६॥

प्राणानामित्ययं माणवकनाभ्यालम्भे विनियुक्तः। दक्षिणमंसमन्ववमृश्यानन्तर्हितां नाभिमालभेत् प्राणानामिति सूत्रितत्वात् [ खा गृ २. ४. १५ ]।

पाठस्तु—प्राणानां ग्रन्थिरसीति। यजुरिदम्। नाभिर्देवता।

हे नाभे त्वं माणवकस्य प्राणानां ग्रन्थिर्ग्रथनकर्तासि। अतो मा विस्रसः मा विस्रंसीः मा चल ॥२०॥

अन्तकादिभिर्मन्त्रैराचार्यो माणवकं गृह्णीयात्। तथा च सूत्रम् [ खा गृ २. ४. १६ ] —अथैनं परिदध्यादन्तकप्रभृतिभिरिति। माणवकस्य त्रीण्यङ्गान्यन्तकाद्यैस्त्रिभिः परिदध्यादित्यर्थः।

पाठस्तु—अन्तक इदं त इति। एतन्मन्त्रप्रभृतीनि सर्वाणि यजूंषि लिङ्गोक्तदेवताकानि।

असावमुमित्यस्य स्थाने तत्तदङ्गानि निर्दिशेत्। अस्मिन्मन्त्रेऽमुमित्युदरं निर्दिशेत्। हे अन्तक मम इदं माणवकस्योदरं ते तुभ्यं परिददामि। परिदानं तदधीनताकरणम् ॥२१॥

## अहुर इदन्ते परिददाम्यमुम् ॥२२॥

[ गो गृ २, १०. २६ ; खा गृ २. ४. १६ द्रः ]

**अनेनाचार्यो ब्रह्मचारिणो नाभिदेशमुत्सर्पति। 'अहुरिर्नाम वायुस्तस्यामन्त्रणम्। हे अहुरे। शेषं पूर्ववत् ॥२२॥**

तथा—अहुर इदं त इति।

हे अहुर कलुष[1] क्रूर इत्यर्थः। अत्यन्तं क्रूरतमः। अंहःशब्दादुरच्। असावमुमित्यस्य स्थाने उर इति निर्दिशेत्। इदमुरस्ते परिददामि ॥२२॥

## कृशन इदन्ते परिददाम्यमुम् ॥२३॥

[ गो गृ २. १०. ३० ; खा गृ २. ४. १६ द्रः ]

**तथाऽनेन हृदयदेशमुत्सर्पति कृशन इति। कृशानुरग्निः। तस्यामन्त्रणम्। हे कृशनो। कृशानोराकारस्य छान्दसं ह्रस्वत्वम्। शेषं पूर्ववत् ॥२३॥**

तथा—कृशन इदं त इति।

हे कृशन प्राणानां क्रोशनकर्तः यम। ते तुभ्यम्। इदम् अवयवमित्यर्थः। असावमुमिति कण्ठं निर्दिशेत्। अमुं कण्ठं परिददामि।

एवमवयवशो माणवकस्य परिदानेन स रोगादिरहितश्चिरकालं जीवतीत्यभिप्रायः ॥२३॥

## प्रजापतये त्वा परिददाम्यसौ ॥२४॥

[ गो गृ २. १०. ३१ ; खा गृ १. २. १७ ; पा गृ २. २. २१ ]।

1 *Bhatta-Bhāṣya* on *G. Gr.*: अहुर इति जाठरोऽग्निरुच्यते।

**अनेनाचार्यस्तस्य दक्षिणेन पाणिना दक्षिणमंसमन्वालभते ( गो गृ २. १०. ३१ )।**

**असौ हे ब्रह्मचारिन् प्रजापतये स्रष्ट्रे त्वा त्वां परिददामि समर्पयामि ॥२४॥**

प्रजापतये त्वेति दक्षिणमंसं पाणिना गृह्णीयात्। तथा च सूत्रम् [ खा गृ १. २. १७ ] —दक्षिणमंसं प्रजापतये त्वेति।

पाठस्तु—प्रजापतये त्वेति। सविता देवता।

इतः प्रभृत्यसौशब्दे विष्णुशर्मन्निति वन्माणवकनाम ब्रूयादाचार्यः। असौ हे विष्णुशर्मन् त्वा त्वां प्रजापतये देवाय परिददामि ॥२४॥

## देवाय त्वा सवित्रे परिददाम्यसौ ॥२५॥

[ आ गृ ३. १०. ६ ; पा गृ २. २. २१ ; गो गृ २. १०. ३२ ;
खा गृ २. ४. १८ ]

**सव्येन सव्यं देवाय त्वेति ( गो गृ २. १०. ३२ )। शेषं पूर्ववत् ॥२५॥**

देवाय त्वेति सव्यमंसं परिगृह्णीयात्। तथाच सूत्रितं भवति [ खा गृ २. ४. १८ ]—सव्येन सव्यं देवाय त्वेति।

पाठस्तु—देवाय त्वेति।

देवाय प्रजापतय इत्यर्थः। शिष्टं स्पष्टम् ॥२५॥

## ब्रह्मचार्यस्यसौ ॥२६॥

[आ गृ १ २२. २ ; शा गृ २. ४. ५ ; आप म २. ६. १४ ;
गो गृ २. १०. ३३; खा गृ २. ४. १६ ]

**अनेनाचार्यस्तं प्रेषयति। असौ पुष्पशर्मन्[1] ब्रह्मचारी यतस्त्वमसि भवसि अतः ॥२६॥**

ब्रह्मचार्यसीति माणवकं ब्रूयात्। सूत्रितं च [ खा गृ २. ४. १६]—ब्रह्मचार्यसि। ब्रूयादित्यस्य शेषः।

पाठस्तु—ब्रह्मचारीति।

असौ हे माणवक विष्णुशर्मन् त्वं ब्रह्मचारी असि आचाराध्ययनादिनियमयोग्यो भवसीत्यर्थः ॥२६॥

1 B पुण्यशर्मन्

समिधमाधेह्यपोऽशान कर्म कुरु मा दिवा स्वाप्सीः ॥२७॥

[ शा गृ २. ४. २५ ; पा गृ २. ३. २ ; गो गृ २. १०. ३४ ; जै गृ १. १२ ; खा गृ २. ४. २० द्रः ]

**समिधं काष्ठम् अग्नौ आधेहि प्रक्षिप अग्निकार्यं कुर्वित्यर्थः। अपः अशान अपो भक्षय प्राशय। कर्म गुरुशुश्रूषादिलक्षणं कुरु। मा दिवा स्वाप्सीः दिवसे न स्वप्स्यसीत्यर्थः ॥२७॥**

समिधमाधेहीत्यादिप्रैषमन्त्रैस्तं संप्रेषयेत्—संप्रैष्योपविश्येत्युक्तत्वात्[1]। हे माणवक यतस्त्वं ब्रह्मचार्यसि अतः समिधमाधेहि अग्नौ प्रक्षिप अग्निकार्यं कुर्वित्यर्थः। अपोऽशान तत्कर्मावसरे शुद्ध्यर्थमाचमनं कुरु। कर्म शुश्रूषालक्षणं कुरु। दिवा अहनि मा स्वाप्सीः स्वापं मा कुरु ॥२७॥

**एवमाचार्येणोक्तो माणवक ओमिति बाढमिति वा ब्रूयात् प्रतिवचनस्यावश्यम्भावित्वात्।**

**उदगग्रेरुत्सृप्योदगग्रेषु दर्भेषु प्राङ्मुख आचार्य उपविष्टः प्रत्यङ्माणवकं दक्षिणजान्वक्तमभिमुखमुदगग्रेष्वेव दर्भेषु त्रिः प्रदक्षिणं मुञ्जमेखलां परिहरन् वाचयतीयं दुरुक्तादित्यृतस्य गोप्त्रीति च [गो गृ २. १०. ३७]।**

इयं दुरुक्तात् परिबाधमाना वर्णं पवित्रं पुनती न[2] आगात्।
प्राणापानाभ्यां बलमाहरन्ती स्वसा देवी सुभगा मेखलेयम् ॥२८॥

[ पा गृ २. २. ८ ; शा गृ २. २. १ ; गो गृ २. १०. ३७ ; खा गृ २. ४. २० ; जै गृ १. १२ ; आप म २. २. ६ ]

ऋतस्य गोप्त्री तपसः परस्त्री घ्नती रक्षः सहमाना अरातीः।
सा मा समन्तमभि पर्येहि भद्रे धर्तारस्ते मेखले मा रिषाम ॥२९॥

[ आप म २. २. १०—तपसः परस्पी द्रः ; मा गृ १. २२. ७—तपसस्तरुत्री ; गो गृ २. १०. ३७ ; जै गृ १. १२ द्रः ]

**इयं प्रत्यक्षा मेखला मौञ्जी रशना नः अस्मान् प्रति आगात् आगतवती।**

1 See *Kh. Gṛ.* 2. 4. 20.    2 C म

किं कुर्वाणा—दुरुक्तात् दुर्वचनात् अपबाधमाना अपसारयन्ती। बाधतिरत्रापसारणे वर्तते। वर्णं च ब्राह्मणाख्यं पवित्रम् अपि सन्ततं पुनती पावयन्ती। तथा चोक्तम्—मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धन इति[1]। किं कुर्वती चेयमागात्—प्राणापानाभ्यां बलमाहरन्ती प्राणो नाभेरूर्ध्वं मुखनासिकागतिर्वायुः। अपानो नाभेरधोगतिः। तयोरिहोपादानं समानादिभ्यः प्रधानापेक्षया। ताभ्यां तदर्थम्। तयोर्वा बलं वीर्यम् आहरन्त्यानयन्ती। स्वसा स्वसेव भगिनीव। परार्थे हि शब्दाः प्रयुज्यमाना इवेन विनापीवार्थं गमयन्ति यथाग्निर्माणवको गौर्वाहीक इति। देवी दानादिगुणयुक्ता सुभगा सकललोकाभिलषणीया।

हे भद्रे भन्दनीये मेखले या त्वं ब्रह्मचारिसम्बन्धिन ऋतस्य सत्यस्य गोप्त्री पालयित्री तपसो ब्रह्मचर्यादिलक्षणस्य परस्वी सर्वस्वभूता घ्नती हिंसन्ती रक्षः रक्षांसि सहमाना अभिभवन्ती अरातीः शत्रून्। व्यत्ययो बहुलमिति (पा ३. १. ८५) व्यत्ययेनारातिशब्दस्य स्त्रीलिङ्गता। सा त्वं भगवती मा मां समन्तं समन्तात् अभिपर्येहि आभिमुख्येन परिवेष्टय। किञ्च ते तव वयं धर्तारः येन केनचित् मा रिषाम मा हिंसिष्महि ॥२९॥

इयं दुरुक्तादित्ययं मेखलाबन्धने विनियुक्तः। तथा च सूत्रितम् [खा गृ २. ४. २० ]—

दक्षिणाजान्वक्तमञ्जलिकृतं प्रदक्षिणं मुञ्जमेखलामाबध्नन् वाचयेदियं दुरुक्तादिति ॥ अञ्जलिकृतं नमस्काराञ्जलिकृतमित्यर्थः।

पाठस्तु—इयं दुरुक्तादिति ऋतस्य गोप्त्रीति च। मन्त्रद्वयस्य त्रिष्टुप् छन्दः। मेखला देवता।

इयं मेखला नोऽस्मानागादागच्छति। छन्दसि लुङ्लङ्लिट इति [ पा ३. ४. ६ ] वर्तमाने लुङ्। किं कुर्वती—दुरुक्तात् तज्जनितात् पापात् परिबाधमाना अस्मान् परितो बाधयन्ती रागतः प्रवृत्ताद्दुरुक्ताद्विनिवर्तनमेवास्माकं तत्कृतं[2] बाधनम्। किञ्च पवित्रं पावनं वर्णं ब्राह्मणादिरूपं पुनती शोभयन्ती कुर्वतीत्यर्थः। यद्वा जात्या ब्राह्मणादिवर्णं पवित्रं यथा भवति तथा पुनती शोभयन्ती। पुनश्च विशेष्यते—प्राणापानाभ्यां प्राणो नाभेरुपरि सञ्चरन् वायुः। अपानोऽधःसञ्चारी। ताभ्यां सकाशाद् बलं सामर्थ्यमाहरन्ती संस्थापयन्ती

1 *Manu* 2. 169

2 B[1], G यत्कृतं

तयोरात्यन्तिकीं गतिं निरुन्धानेत्यर्थः। किञ्चेयं मेखला स्वसा देवी देवानां स्वसृस्थानीया सुभगा सुष्ठु भजनीया शोभनधना वा ॥२८॥

ऋतस्य सत्यस्य यज्ञस्य वा गोप्त्री गोपयित्री। मेखलासंबन्धनेन सत्याभिवृद्धिः प्रसिद्धा। तथा सा तपसः क्लेशसहनात्मकस्य[1] ब्रह्मचर्यनियमादिजनितस्य परस्त्री उत्कृष्टधनरूपा[2] तपसो मूलवर्धनेत्यर्थः[3]। मेखलया तपोवर्धनं प्रसिद्धम्। किं च रक्षो राक्षसान् घ्नती हिंसित्री। अरातीः अस्माकमदानशीलान् वैरिणः सहमाना अभिभवन्ती। किञ्च हे भद्रे कल्याणि मेखले सा उक्तलक्षणा त्वं मा मां समन्तम् मध्यदेशस्य[4] सर्वतः अभि आभिमुख्येन पर्येहि परिगच्छ। ते तव धर्तारो धारणं कुर्वन्तो मा रिषाम हिंसां मा प्राप्नुयाम ॥२६॥

**अथोपसीदत्यधीहि भोः सावित्रीं मे भवाननुब्रवीत्विति [गो गृ २.१०.३८]। स तमाह**

तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो यो नः प्र चोदयात् ॥३०॥

[ ऋ स ३. ६२. १० ; सा स २. ८१२ ; वा स ३. ३५ ; आप म २. ४. १३ ; शा गृ २. ५. १२ ; गो गृ २. १०. ३६ ; खा गृ २. ४. द्रः ]

**गायत्रीयम्। यत् भगवतः सवितुः देवस्य दानादिगुणयुक्तस्य वरेण्यं वरणीयं भर्गः भजनीयम्। सवित्राऽपि यत् सेव्यत इत्यर्थः। तत् धीमहि। ध्यै चिन्तायाम्। चिन्तयामः तद्विषयां चिन्तां कुर्मः। किम्भूतः सविता— यः नः अस्माकं सम्बन्धिनीः धियः बुद्धीः स्नानदानाध्ययनहोमादिकर्मसु प्रचोदयात् प्रवर्तयेदित्यर्थः। उदिते हि भगवति सकलान्यभ्युदयलक्षणानि कार्याणि प्रवर्तन्तेऽस्तमितेच निवर्तन्त इत्यर्थः ॥३०॥**

एवं बद्धमेखलो'ऽधीहि भो इत्युपसीदेत्' [ खा गृ २. ४. २१ ]। गुरुमिति शेषः। हे गुरो मदर्थमध्ययनं कुर्वित्यर्थः। एवमुक्त आचार्यस्तथा कुर्यात्। तदेतदध्ययनार्थमाचार्यसमीपप्राप्तिरुपनयनमित्युच्यते।

1 G क्लेशस्य मामकस्य
2 B[1], G उत्कृष्टसाधनरूपा
3 G, M[1] मूलधनेत्यर्थः
4 The word *samanta* is interpreted as having a reference to the places in Madhyadeśa. But Sāyaṇa explains *samantam* elsewhere (e. g. *Ait. Br.* 2. 3) simply as 'on all sides': पुरतः पृष्ठतः पार्श्वयोश्च.

पाठस्तु—तत् सवितुरिति । गायत्र्येषा सवितृदेवताका ।

अस्य मन्त्रस्यार्थः शौनकशङ्कराचार्यप्रभृतिभिर्बहुप्रकारं कल्परूपेण प्रपञ्चितः[1] । विशेषार्थजिज्ञासुभिः कल्पा द्रष्टव्याः । अस्माभिरत्र संगृह्य व्याख्यायते । य इत्युत्तरवाक्ये वक्ष्यति । तस्य सवितुः—षुञ् प्रेरणे—सर्वप्राणिनां हृदये स्थित्वा तत्कर्मपरिपाकानुसारेण भोगार्थं तत्साधनकर्मार्थं च प्रेरकस्य । परमेश्वरस्य तस्य सर्वप्रेरकत्वं ब्रह्मण 'एष ह्येवैनं साधु कर्म कारयतीति'[2] 'एष त आत्माऽन्तर्याम्यमृत'[3] इति तथा[4] 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानी'त्यादिश्रुतिस्मृतिषु प्रसिद्धम् । वरेण्यं सर्वैर्वरणीयमुपासनीयं भर्गः जननमरणादिलक्षणस्य संसारस्य तदुपादानभूतस्याज्ञानस्य भर्जकं पारमेश्वरं तेजः अग्न्यादितेजोवत् प्रकाशकत्वात् । प्रज्ञानघनं सत्यज्ञानादिलक्षणं ब्रह्मस्वरूपं तेजो भर्गशब्देनोच्यते । धीमहि ध्यायेमहि भावनया साक्षात्करवामेत्यर्थः । यः सवितोक्तरूपः परमेश्वरो नोऽस्माकं धियो बुद्धीः स्वरूपावगतिसाधनाध्ययनानुष्ठानादिसत्कर्मसु प्रेरयति तद्धीमहीति समन्वयः । तस्य प्रेरकत्वमुक्तमध्यात्मपक्ष एवम् । अधिदैवतपक्षे सवितुः स्वोदयेन प्राणिनां गमनादिव्यापारेषु प्रेरयितुः सूर्यस्य वरेण्यं सर्वैः प्रकाशार्थिभिः वरणीयं भर्गः तमोभञ्जकं तेजो रश्मिसमूहं धीमहि । यः सविता नो धियः प्रचोदयात् । सवितर्युदिते सर्वप्राणिनां बुद्धयः स्वस्वव्यापारेषु प्रवर्तन्त इति प्रसिद्धम् । अस्याध्यापनप्रकारो गृह्ये [ खा गृ २. ४. २२ ] 'तस्मा अन्वाह सावित्रीं पच्छः' इत्यादिनोक्तोऽवगन्तव्यः ॥३०॥

**महाव्याहृतीश्चाचार्यो ब्रह्मचारिणमन्वाह**

## भूर्भुवः स्वरोम् ॥३१॥

[ तै आ १०. २. १ प्रः—सुवरोम् ; आ गृ १. १४. ४ ; गो गृ २. १०. ४० ;
खा गृ २.४.२३, २४ द्रः ]

**भूः पृथिवी भुवः अन्तरिक्षं स्वः द्यौः ओम् आत्मा । एतदुक्तं भवति—त्रैलोक्यात्मानं प्रतिपद्यस्वेति ॥३१॥**

1 Mss. of *Gāyatrībhāṣya* bearing Śaṅkara's name are listed in *Catalogus Catalogorum*.

2 *Kauṣ. Up.* 3. 9

3 *Bṛ. Up.* 3, 7. 3

4 *Gītā* 18. 61

अथ भूर्भुवः स्वरोमिति सप्रणवव्याहृतीरध्यापयेत्। तथा च सूत्रितम् [खा गृ २. ४. २३, २४]—महाव्याहृतीश्चैकैकशः। ओँकारश्चेति॥ पादादावर्धर्चादावृगादौ च महाव्याहृतीः प्रणवं च वाचयेदित्यर्थः।

पाठस्तु—भूर्भुवः स्वरोमिति।

व्याहृतित्रयस्याध्यापनेन भूरादिलोकत्रयवर्तिप्रपञ्चजातस्य प्रणवेन परमेश्वरस्य च कीर्तनं भवतीत्यभिप्रायेण महाव्याहृतिप्रणवानामध्यापनमिति बोद्धव्यम्। न च स्वाध्यायाध्ययनार्थमुपसन्नाय गायत्र्यध्यापनं विरुद्धमिति वाच्यम्। अस्या वेदादित्वात्। तथा च ब्राह्मणम्[1] सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यत इति। किञ्चास्याः सर्वेषु वेदेषु सारत्वाच्च। तथा च स्मर्यते—त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहदित्यादिभिः[2] ॥३१॥

**वार्क्षं चास्मै दण्डं प्रयच्छन् वाचयति [ गो गृ २. १०. ४१ ]**

**सुश्रवः सुश्रवसं मा कुरु यथा त्वं सुश्रवः[3] सुश्रवा देवेष्वेवमहं सुश्रवः सुश्रवा ब्राह्मणेषु भूयासम् ॥३२॥**

[ गो गृ २. १०. ४१ ; खा गृ २. ४. २६ द्रः ; आप म २. ५. १ ]

**पङ्क्तिरियम्। दण्डार्पणे विनियोगः। दण्डाग्नी देवते।**

**दण्डं गृह्णन् ब्रह्मचारी तमग्निं च प्रार्थयते।—हे दण्ड! किम्भूत—सुश्रवः श्रूयत इति श्रवो यशोऽभिधीयते। शोभनं श्रवो यस्य स सुश्रवाः। तस्यामन्त्रणम्। एतदुक्तं भवति—यथा त्वं वेदस्वीकरण-धारण-तदर्थज्ञानेन लोकेषु प्रख्यातयशा एवं मामपि सुश्रवसं कुरु। यद्यप्यचेतनत्वाद्दण्डस्य वेदस्वीकरणाद्यसम्भवस्तथाप्यधिष्ठातृदेवताभिप्रायेणोक्तम्। एवमग्निं प्रार्थयते—हे अग्ने सुश्रवः पुनरामन्त्रणेन दण्डादग्नेः सुश्रवस्त्वातिशयः ख्याप्यते। यथा त्वं देवेषु इन्द्रादिषु मध्ये सुश्रवाः एवमहं ब्राह्मणेषु मध्ये सुश्रवाः भूयासम् भवानि ॥३२॥**

अथ वार्क्षं दण्डं प्रयच्छेदाचार्यः। तस्य प्रतिग्रहे सुश्रव इति मन्त्रो विनियुज्यते। तथा च सूत्रम् [खा गृ २. ४. २५, २६]—प्रयच्छत्यस्मै वार्क्षं दण्डं सुश्रवः सुश्रवसं मेति॥ प्रतिगृह्णीयादिति शेषः।

पाठस्तु—सुश्रवः सुश्रवसमिति। यजुष्ट्वादस्य च्छन्दो नास्ति। धार्यमाणो दण्डो देवता।

1 See Āp. Dh. S. 1. 1. 10
2 *Manu* 2. 77
3 A & B श्रम्न

हे सुश्रवः शोभनं श्रवः श्रवणं यस्य स तथोक्तः। हे उक्त पलाशदण्ड त्वं यथा सुश्रवा इत्युच्यसे तथा मां सुश्रवसं शोभनश्रवणं गुरूपदिष्टाध्ययनस्य सुष्ठु श्रोतारं कुरु। पालाशस्य सुश्रवस्त्वप्राप्तिस्तैत्तिरीयब्राह्मणे [१. १. ३. ११] श्रूयते

देवा वै ब्रह्मन्नवदन्त। तत् पर्ण उपाश्टणोत् सुश्रवा वै नामेति।

किञ्च हे सुश्रवः उक्तलक्षण दण्ड यथा त्वं देवेषु मध्ये सुश्रवाः एवमहं हे सुश्रवः ब्राह्मणेषु अस्मत्समानेषु मध्ये सुश्रवा भूयासम् ॥३२॥

**अस्तमिते समिधमादधाति [ गो गृ २. १०. ४६ ]**

**अग्नये समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्यस्येवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन धनेनान्नाद्येन समेधिषीय स्वाहा ॥३३॥**

[ शा गृ २. १०. ३ ; गो गृ २. १०. ४६ ; खा गृ २. ४. २७ द्रः ; जै गृ १. १२ ; आ गृ १. २१. १ ; आप म २. ६. २—समिध्यस एवं मामायुषा—द्रः ]

**हे अग्ने अग्नये युष्मदर्थं समिधम् संवर्धनीम् आहार्षम् आहृतवान्। किंविशिष्टाय—बृहते महते प्रतिप्राण्यन्तश्चरत्वेन। जातवेदसे जातधनाय जातप्रज्ञाय वा। हे अग्ने यथा त्वम् अनया समिधा समिध्यसि सम्यग्दीप्यसे। एवम् अनेन प्रकारेण अहम् अपि ब्रह्मचारी आयुषा जीवितेन मेधया वेदग्रहणधारणरूपया वर्चसा दीप्त्या प्रजया उत्तरकालभाविपुत्रसन्ततिरूपया पशुभिः गवादिभिः ब्रह्मवर्चसेन ब्राह्मणतेजसा धनेन वित्तेन अन्नाद्येन व्रीहियवादिकेन समेधिषीय एवमेभिरष्टाभिः फलैः सम्यग्दीप्तो भूयासम्[1] ॥३३॥**

अग्नये समिधमित्ययं समिदाधाने विनियुक्तः। तथा च सूत्रम् [ खा गृ २. ५. २७ ]—

समिधमादध्यादग्नये समिधमिति ॥

पाठस्तु—अग्नये समिधमाहार्षमिति। यजुरयं मन्त्रः। देवता त्वग्निः।

हे अग्ने अग्नये अग्रणीत्वादिगुणयुक्ताय तुभ्यं समिधं समिन्धनसाधनां यज्ञियां शाखामाहार्षमाहृतवानस्मि। कीदृशाय तुभ्यम्—बृहते महते गुणैः प्रभूताय। जातवेदसे जातविद्याय जातधनाय वा। वेद इति धननाम। जातवेदशब्दो निरुक्ते[2] बहुधा निरुक्तः।

1 B ध्रियासम्  2 *Nir* 7. 19

जातवेदाः कस्माज्जातानि वेद जातानि चैनं विदुर्जाते जाते विद्यते इति वा जातवित्तो वा जातधनो जातविद्यो वेत्यादिना । हे अग्ने त्वं समिधा अस्मदाहितया यथा समिध्यसे एवमहमायुषा वर्षशतपर्यन्तेनायुष्येण वर्चसा वर्चः शरीरकान्तिविशेषस्तेन च मेधया अधीतस्य धारणवती मेधा तया च प्रजया पुत्रादिलक्षणया पशुभिः गवादिभिश्च । एतदुभयप्रार्थनं भाव्यपेक्षम् । किञ्च ब्रह्मवर्चसेन अध्ययनानुष्ठानाद्यागतस्तेजोविशेषो ब्रह्मवर्चसम् तेन च । अन्नाद्येन अद्यमदनीयमन्नं च तेनापि । समेधिषीय सम्यग्वर्धिषीय प्रवृद्धो भूयासम् । स्वाहेति हविरभिधानम् । समिधं प्रक्षिपामीत्यर्थः ॥३३॥

**चक्षुरादीन्द्रियापचारे ब्रह्मचारिणाऽनेन प्रायश्चित्तार्थं द्वे आज्याहुती आज्यलिप्ते वा समिधौ कल्प्येते ।**

पुनर्मामैत्विन्द्रियं पुनरायुः पुनर्भगः।
पुनर्द्रविणमैतु मा पुनर्ब्राह्मणमैतु मा ॥३४॥

[ अ स ७. ६७. १—पुनर्माम्मैत्विन्द्रियं ; गो गृ ३. ३. ३४ ; खा गृ २. ५. ३५ द्र: ; मा गृ १. ३. १ ]

पुनर्मनः पुनरात्मा म आगात् पुनश्चक्षुः पुनः श्रोत्रं म आगात् ।[1]
वैश्वानरो अदब्धस्तनूपा अन्तस्तिष्ठतु मे मनोऽमृतस्य केतुः स्वाहा ॥३५॥

[ वा स ४. १५—पुनरायुर्मे आगन् ; तै आ २. ५. ३ द्र: ; गो गृ ३. ३. ३४ ; खा गृ २. ५. ३५ द्र: ]

**एतौ निगदावग्निदेवताकौ समित्प्रक्षेपे विनियुक्तौ ।**

**रेतःस्कन्दनादिदोषेण यन्ममापचितमिन्द्रियम्[2] इन्द्रियाणां बलसामर्थ्यं तदुपचितं[3] सत् माम् ऐतु आगच्छतु स्वकार्यकरणसमर्थं भवत्वित्यर्थः । पुनः**

1 G adds पुनः प्राणः पुनराधीतम्. Cf. *Tait. Ār.* 2. 5. 3.
2 B omits इन्द्रियम्.
3 B तदपचरितं

आयुः जीवितं मामैत्विति सम्बन्धः। पुनः भगः पुण्यं मामैतु। पुनः द्रविणं धनं मामैतु। पुनः ब्राह्मणं ब्राह्मण्यं छन्दो वा मामैतु ॥३४॥

पुनः मनः चित्तं मे मम आगात् आगच्छतु। पुनः आत्मा क्षेत्रज्ञः मे मम आगात्। पुनः चक्षुः पुनः श्रोत्रं मे मम आगात्। इन्द्रियग्रहणेन चक्षुःश्रोत्रयोर्गृहीतत्वात् पुनस्तयोर्ग्रहणं प्राधान्यप्रतिपत्त्यर्थम्। यथा ब्राह्मणा आयाता वसिष्ठोऽप्यायात इति। किञ्च वैश्वानरः वह्निः मे मम अन्तः मध्ये तिष्ठतु। किम्भूतः—अदब्धः सर्वैरहिंसितः। दभ्नोतिर्हिंसार्थे वर्तते। तथा पुनरपि स एव विशिष्यते। तनूपाः तनूं शरीरं पाति रक्षति यः सर्वप्राणिनामन्तश्चरत्वेन स तनूपाः। आतो मनिन् क्वनिब्वनिपश्चेति [पा ३. २. ७४] विच्प्रत्ययः। किञ्च मे मम अमृतस्य अन्तर्यामिरूपस्यात्मनः अन्तः मध्ये मनः चेतः तिष्ठतु स्वस्थानस्थितं भवत्वित्यर्थः। किम्भूतं मनः—केतुः चेतसश्चिह्नम्। तद्वशेन हि पूर्वोपलब्धार्थस्मरणहेयोपादेयबुद्धयः सर्वप्राणिनां प्रवर्तन्ते। स्वाहेति हविरभिधानम् ॥३५॥

इति भट्ट-गुणविष्णुविरचिते छान्दोग्यमन्त्रभाष्ये
प्रथमप्रपाठके षष्ठः खण्डः ॥

ब्रह्मचारिणोऽन्येषां वा चित्ययूपोस्पर्शनचक्षुरादीन्द्रियापचारप्रायश्चित्तार्थं पुनर्मामैतु पुनर्मन इत्येताभ्यां द्वे आहुती आज्यलिप्ते वा समिधौ प्रक्षिपेज्जपेद्वा। तथा च सूत्रम् [ खा गृ २. ५. ३५-३७ ]—चित्ययूपोपस्पर्शनकर्णक्रोशाक्षिवेपनेषु सूर्याभ्युदितः सूर्याभिनिर्मुक्त इन्द्रियैश्च पापस्पर्शैः पुनर्मामित्येताभ्यामाहुती जुहुयात्। आज्यलिप्ते वा समिधौ। जपेद्वा लघुष्विति ॥ आद्योऽनुष्टुब् द्वितीयो यजुराशास्यमानदेवताकौ।

तत्र प्रथमः—पुनर्मामैत्विति।

रेतः स्कन्दनादिदोषेण यन्मया [1]प्रच्युतमिन्द्रियमस्ति तन्मां पुनरैतु पुनरागच्छतु। एवं सामान्येन्द्रियप्रार्थनम्। इन्द्रियाणि विशेषेणोत्तरमन्त्रे प्रार्थ्यन्ते। किञ्चेन्द्रियचापल्यात् प्रच्युतमस्मदीयमायुः पुनरैतु। तथा प्रभ्रष्टं भगो भाग्यं पुण्यं मां पुनरैतु। पुनर्द्रविणं धनं कान्तिर्वा मामैतु। तथा पुनर्ब्राह्मणं ब्राह्मण्यं मामैतु ॥३४॥

1 B[1] विरचित॰ M[1] प्रचरित॰

तथा द्वितीयः—पुनर्मनः पुनरात्मेति ।

इन्द्रियचापलप्रभ्रष्टा मनआदिश्रोत्रान्ताः[1] पुनर्मे ममागच्छन्तु । सर्वमेवाब्रह्मचर्यात् प्रच्युतं पुनरागात् । किञ्च वैश्वानरः विश्वेषां नराणां हितो विश्वानरः । विश्वानर एव वैश्वानरो राक्षसवायसादिवत् । तादृशोऽग्निर्जाठरः । मनो मनसः तदाश्रयस्य हृदयस्येत्यर्थः । तस्यान्तस्तिष्ठतु । कीदृशो वैश्वानरः—अदब्धः अहिंसितकर्मा तनूपाः तन्वाः पाता । अमृतस्यामरणस्य जीवनस्य केतुः प्रज्ञापकः । हृदये तस्मिन् सति जीवति सर्वो जन इत्यमृतस्य केतुत्वं तस्य प्रसिद्धम् । स्वाहेति गतम् ॥३५॥

इत्युपनयनाङ्गभूता मन्त्राः ॥

॥*॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणमन्त्रपर्वणि प्रथमप्रपाठके षष्ठः खण्डः ॥*॥

---

1 G मनआदिप्राणान्ताः

## अथ प्रथमप्रपाठके सप्तमः खण्डः

शीतोष्णाभिरद्भिर्गन्धवतीभिः समावर्तमानं ब्रह्मचारिणमाचार्योऽभिषिञ्चेत्। अति तान् सृजामीत्युत्तमपुरुषप्रयोगान्मन्त्रवर्णलिङ्गात् स्वयमेवेति गम्यते। समाचारः पुनराचार्यो निजेनाञ्जलिना ब्रह्मचार्यञ्जलिं जलपूर्णं गृहीत्वा ये अप्स्वन्तरग्नय इत्यनेन भूमाववसिञ्चति। यदपां घोरमिति च [ गो गृ ३. ४. ११—१५ द्रः ]।

ये अप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मरूको मनोहाः
खलो विरुजस्तनूदूषिरिन्द्रियहा अति तान्त् सृजामि ॥१॥

[ गो गृ ३. ४. १४ ; खा गृ ३. १. ११ ; पा गृ २. ६. १० ; शा गृ ५. २. ५ द्रः ]

**निगदोऽयम्। अग्नयो देवताः। समावर्तने विनियोगः।**

**ये अग्नयः वक्ष्यमाणाः अप्सु सलिलेषु अन्तः मध्ये प्रविष्टाः। के पुनस्ते—गोह्यः एकः उपगोह्यः द्वितीयः मरूकः[1] तृतीयः मनोहाः चतुर्थः खलः पञ्चमः विरुजः षष्ठः तनूदूषिः सप्तमः इन्द्रियहाः अष्टमः। तान् एतानष्टावग्नीन्[2] जलदूषणान् अतिसृजामि अतिशयेन त्यजामि। येनेदं जलं मम स्नानयोग्यं भवतीत्यर्थः ॥१॥**

चौलोपनयनयोर्विधानादेव छन्दोगानां गोदानिकव्रातिकादित्यमाहानाम्निकौपनिषदभौतिकब्रह्मसामाख्यानि यानि सप्त वेदव्रताःन तानि सर्वाण्यभिहितानि भवन्ति।

गोदाने चौलवत् कल्प[3] इत्यादिसूत्रेणातिदिष्टत्वात्। अतो व्याख्येया मन्त्रविशेषा न सन्ति।

अथ समावर्तनाङ्गभूता मन्त्रा उच्यन्ते। तयोराप्लवनं पूर्वमिति[4] यदाप्लवनं वधूवरयोरुक्तं तत्र वध्वाप्लवनं पूर्वमेवोक्तम्[5]। अत्र विवोढुर्वरस्याप्लवनमुच्यते।

1 A मनौकः, I मेरौकः ; *P. Gṛ.* 2. 6. 10 मयूखो, but Jayarāma reads there मयूषो. He cites from Vṛddha Manu:
गोह्यादयोऽग्नयो ह्यष्टावमेध्यास्त्वशुभावहाः।
शुभकृद्रोचनस्त्वेको मेध्यो दीप्तिकरः परः॥

2 *Ś. Gṛ* 5.2. 5 have variants for the eight names of Agni.

3 See *Kh. Gṛ.* 2. 5. 1.

4 See *Kh. Gṛ.* 1. 3. 3.

5 *Ch. Br.* 1. 1. 2-4

आप्लवने पुरस्तादाचार्यकुलस्य परिवृत आस्ते इति सूत्रकारेणोक्त[1] आप्लवन आचार्यः सर्वौषधिसंयुक्तैस्तप्तोदकैः सुगन्धोदकैः शीतोदकैश्च पूरितमुदकाञ्जलिं शिष्यस्योपरि अवसिञ्चेत्। अत्र ये अप्सु यदपामित्याभ्यामुदकाञ्जलिं भूमौ प्रक्षिपेत्। तथा च सूत्रम् [ खा गृ ३. १. ११, १२ ]—ये अप्स्वित्यपामञ्जलिमवसिञ्चेद् यदपामिति चेति ॥

तत्र प्रथमः—ये अप्स्वन्तरग्नय इति। निगदोऽयमतो न च्छन्दः। अग्नयो देवताः।

अप्सु अभिषेकसाधनासु अन्तर्मध्ये येऽगोह्यादयोऽष्टौ दुष्टाग्नयः प्रविष्टास्तानतिसृजामि ॥१॥

## यदपां घोरं यदपां क्रूरं यदपामशान्तमति तत् सृजामि ॥२॥

[ गो गृ ३. ४. १५ ; खा गृ ३. १. १२ द्रः ]

**अपां सम्बन्धि यद् घोरं भीमं यत् अपां क्रूरं निष्ठुरं यत् अपाम् अशान्तं रुजाकरं[2] तत् अतिसृजामि। प्रयोजनं प्रागुक्तमेव ॥२॥**

अथ द्वितीयः—यदपां घोरमिति। अयमपि यजुर्मन्त्रः। घोरत्वादग्न्यादयो दुष्टा आपो वा देवताः।

यद्वस्तु अपामभिषेकार्थानां मध्येऽस्ति घोरं भयजनकं तदतिसृजामि परित्यजामि। तथा यदपां क्रूरं क्रौर्योपेतं पीडाकार्यस्ति तदतिसृजामि। तथा यदपामशान्तिकरं भवति तदतिसृजामि ॥२॥

**यो रोचनस्तमिह गृह्णामीत्यात्मानमभिषिञ्चति। यशसे तेजस इति च। येन स्त्रियमकृणुतमिति च। तूर्ष्णीं चतुर्थम् [ गो गृ ३. ४. १६—१९ ]।**

## यो रोचनस्तमिह गृह्णामि तेनाहं मामभिषिञ्चामि ॥३॥

[ गो गृ ३. ४. १६ ; खा गृ ३. १. १४ द्रः ; पा गृ २. ६. १० ]

**यजुरिदम्। पूर्वेभ्यो गोह्यादिभ्यो यः अन्यः रोचनाख्यः अग्निः दीप्तिकरः तम् इह कर्मणि समावर्तनाख्ये प्रारब्धे अहं ब्रह्मचारी गृह्णामि। तद्ग्रहणस्य फलमाह—तेन रोचनेन जलान्तःस्थितेन अहं माम् आत्मानम् अभिषिञ्चामि आभिमुख्येन स्नपयामीत्यर्थः ॥३॥**

यो रोचनो येन स्त्रियमित्येतावभिषेके विनियुक्तौ। तथा च सूत्रम् [ खा गृ ३. १. १४, १५ ]—यो रोचन इति गृह्यात्मानमभिषिञ्चेद् येन स्त्रियमिति च ॥ पूर्ववदञ्जलिना पूर्णमुदकं गृहीत्वाभिषिञ्चेत्। अमुमभिषेकमाचार्यकर्तृकं केचन ब्रुवते। तस्मिन् पक्षे

1 See *Kh. Gr.* 3. 1. 1.　　2 A कद्रुकरं ; B कराडकरं

आत्मानमिति शिष्योपलक्षणार्थम्। अतो मामित्यस्य स्थानेऽमुमिति ब्रूयात्। अपरे त्वनेनैव मन्त्रलिङ्गेनात्मकर्तृकं ब्रुवते। अन्ये तूभयकर्तृकताम्।

तत्र प्रथमः—यो रोचनस्तमिहेति[1]। यजुर्मन्त्रोऽयमब्देवताकः।

य उक्तदोषराहित्येन रोचनोऽभिषिक्तानां दीप्तिकरांशोऽस्ति तमिहास्मिन्नभिषेककर्मणि गृह्णामि तेनांशेनाहं मामभिषिञ्चामि। किमर्थम्—यशआदिलाभाय। यशः कीर्तिः। तेजः पराभिभवसामर्थ्यम्। ब्रह्मवर्चसं श्रुताध्ययनजन्यं तेजः। बलमन्नपानादिजन्यं शरीरसामर्थ्यम्। इन्द्रियं चक्षुरादिपाटवम्। वीर्यमपत्योत्पादनसामर्थ्यम्। अन्नाद्यमदनीयान्नं व्रीहिगोधूमादिकम्। रायस्पोषो धनसमृद्धिः। त्विषिर्दीप्तिः। अपचितिः पूजा ॥३, ४॥

किमर्थम्—

## यशसे तेजसे ब्रह्मवर्चसाय बलायेन्द्रियाय वीर्यायान्नाद्याय रायस्पोषाय त्विष्या[2] अपचित्यै ॥४॥[3]

[ गो गृ ३. ४. १७ ; खा गृ ३. १. १४ द्रः ]

**निगदोऽयम्। यशः [4]स्वकर्मोत्थापितगुणोदयः। तदर्थम्। तेजसे स्वगुणप्रकाशार्थम्। ब्रह्मवर्चसाय वेदविदितयशःप्राप्त्यर्थम्। बलाय शरीरोपचयार्थम्। इन्द्रियाय चक्षुरादिदार्ढ्यार्थम्। वीर्याय प्रजोत्पादनसामर्थ्याय। अन्नाद्याय व्रीह्याद्यर्थम्। रायस्पोषाय धनपोषणार्थम्। त्विषिः[5] दीप्तिः कान्तिः तदर्थम्। अपचित्यै पूजाप्राप्त्यर्थम्। शेषं पूर्वं व्याख्यातम्। अनेन यथेष्टफलदत्वं रोचनस्योच्यते ॥४॥**

1 The next Mantra beginning with यशसे forming, according to Sāyaṇa, the second part of this Mantra is rubricated in *G. Gṛ.* as a separate unit, which Guṇaviṣṇu explains separately.

2 A त्विष्या

3 Sāyaṇa, following *Kh. Gṛ.*, has explained this Mantra along with the preceding one.

4 B समित्कर्मोत्थापित०

5 A त्विष्टिः

येन स्त्रियमकृणुतं येनापामृशतं सुराम् ।
येनाक्षानभ्यषिञ्चतं येनेमां पृथिवीं महीम् ॥
यद् वां तदश्विना यशस्तेन मामभिषिञ्चतम् ॥५॥

[ पा गृ २. ६. १२—येन श्रिय० ; शा श्रौ ८. ११. १३ ; गो गृ ३. ४. १८ ;
खा गृ ३. १. १७ द्रः ]

षडष्टका महापङ्क्तिरियम् । द्विपदा वा तिस्रो गायत्र्यः । अश्विनौ देवते । विनियोगः प्रागेवोक्तः ।

अश्विनौ सर्वेषां कर्मणामधिष्ठातारावनेकस्तुतिपूर्वकं समावर्तमानेन ब्रह्मचारिणा प्रार्थ्येते—हे अश्विना । सुपां सुलुगित्यादिना [ पा ७. १. ३९ ] प्रथमाद्विवचनस्य डादेशः । अश्विनौ येन कर्मणा विश्पलाख्यां स्त्रियम् युवां खञ्जां सतीं पुनर्नवपादाम् अकृणुतम् कृतवन्तौ । येन च सौत्रामण्यां सुरां पेष्टीं वीर्यविवृद्ध्यर्थम् अपामृशतम् अपामृष्टवन्तौ । येन अक्षान्—पाशकान् [1]जेत्रीकरणाय अपामृशतमिति सम्बन्धः । येन च इमाम् एतां पृथिवीम् । किम्भूताम्—महीं महतीम् अभ्यषिञ्चतम् अभिषिक्तवन्तौ शस्यप्ररोहद्वारेण वर्धितवन्तावित्यर्थः । इदानीं तौ परोक्षौ सन्तौ प्रत्यक्षीकृत्योच्येते । तथा चोक्तम्[2]—परोक्षकृताः प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठाः ।

हे अश्विनौ यत् तत् एवम्भूतमनन्यसाधारणं वां युवयोः यशः शोभनं कर्म तेन माम् अभिषिञ्चतम् आभिमुख्येन स्नपयतम् । प्रार्थने लोट् । येन युवाभ्यामहमभिषिक्तः कृतकृत्यो भवामीत्यर्थः ॥५॥

अथ द्वितीयः येन स्त्रियमिति । षडष्टका महापङ्क्तिरस्य च्छन्दोऽश्विनौ देवते ।

हे अश्विनौ देवते येन यशसा सामर्थ्यातिशयेन स्त्रियं विश्पलाख्याम् अकृणुतम् गमनसाधनपादराहित्येन जीवितुमशक्तायै पुनः पादप्रदानेन रक्षितवन्तावित्यर्थः । तथा येन सुरां सौत्रामण्यामपामृशतम् अपामर्शं स्वीकारं कृतवन्तौ । तथा येन यशसा अक्षान् रथचक्राधारभूतदण्डप्रान्तान् निर्बाधपरिभ्रमणाय अभ्यषिञ्चतम् स्नेहप्रदानं कृतवन्तावित्यर्थः । तथा येनेमां दृश्यमानां महीं महतीं पृथिवीमभ्यषिञ्चतं वृष्ट्युदकेन । हे अश्विनौ वां

1 B जैत्री०
2 *Nirukta* VII. 3

युवयोः देवभिषग्भूतयोः यद्यशोऽसाधारणसामर्थ्यमस्ति तेन यशसा सामर्थ्येन मामभिषिञ्चतम् स्नापयतम् ॥५॥[1]

**अभिषेकानन्तरमुपोत्थायादित्यमुपतिष्ठत उद्यन् भ्राजभृष्टिभिरित्येतत्प्रभृतिना मन्त्रेण[2] चक्षुरसीत्येवमन्तेन [ गो गृ ३. ४. २० द्र: ] ।**

उद्यन् [3]भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात् प्रातर्यावभिरस्थात् ।
दशसनिरसि दशसनिं मा कुर्वा त्वा विशाम्या मा विश ॥६॥

[ पा गृ २. ६. १६—भ्राजभृष्णुभि° ; गो गृ ३. ४. २० ; खा गृ ३. १. १६ द्र: ]

**निगदोऽयम् । सूर्यो देवता । सूर्योपस्थाने विनियोगः । एवमुत्तरस्यापि मन्त्रद्वयस्य ।**

**इदि परमैश्वर्ये । परमैश्वर्ययोगात् इन्द्रः आदित्यः उद्यन् उदीयमानः मरुद्भिर्देवैः सह अस्थात् स्थितवान् । किम्भूतैः—भ्राजभृष्टिभिः भ्राज्यत इति भ्राजा दीप्ता भ्राजनम् । भृष्टिः दीप्तिः । भ्राजा भृष्टयो येषां ते भ्राजभृष्टयो मरुतः । अतस्तैः । किमुक्तं भवति—सातिशयदीप्तियुक्तैरित्यर्थः । न केवलं मरुद्भिरस्थात् प्रातर्यावाणः देवविशेषाः तैश्च सह अस्थात् । किञ्च दशसनिरसि । दश सनोषि सनसि वा यस्त्वं स दशसनिः । असि भवसि । सनोतेः सनतेर्वा । छन्दसि वनसनरक्षिमथाम् [ पा ३. २. २७ ] इतीन् प्रत्ययः । दशानां संविभक्ता यतस्त्वमतो मामपि दशसनिं कुरु । त्वा त्वाम् अहम् आविशामि अर्थित्वेनोपधावामीत्यर्थः । त्वमपि मा माम् आविश अभिमतफलदातृत्वेनाभिमुखो भवेत्यर्थः ॥६॥**

उद्यन्नित्यादिभिस्त्रिभिर्मन्त्रैरादित्यमुपतिष्ठेत । तथा च सूत्रम् [ खा गृ ३. १. १७ ]—उद्यन्नित्यादित्यमुपतिष्ठेदिति ।

तत्र प्रथमः—उद्यन् भ्राजभृष्टिभिरिति । त्रिभिरपि मन्त्रैरादित्यात्मा इन्द्रस्तूयते आदित्य एव वा ।

1 For some of the feats of Aśvins enumerated in the Mantra, cf. *Ṛv.* 1. 116. 7; 15; *Av.* 14. 1. 36.

2 B मन्त्रत्रयेण

3 The *Wörterbuch* and the *Vaidikapadānukramakośa* II, 2 ( p. 763 ) suggest emendation as भ्राजदृष्टिभिः and the latter remarks : भ्राजभृष्टिभिरिति चिन्त्य एव.

अयमादित्याभिमानी इन्द्रः उद्यन् उदयं कुर्वन् मरुद्भिः मरुद्गणैः स्वानुचरैरस्थात् स्थितवान्। कीदृशैर्मरुद्भिः—भ्राजभृष्टिभिः भ्राजभृष्टयस्तेजोयुक्ता वायुविशेषाः तद्वद्भिः। अथवा भृष्टयो दीप्तयः। भ्राजन्त्यो भृष्टयो येषां ते तथोक्ताः। प्रायेणेन्द्रामरुत इत्युक्त्वा-दिन्द्रदेवताके मन्त्रे मरुतां सन्निपातभाक्त्वम्। [1]मरुतो हैनं नाजहुरित्यादिब्राह्मणान्मरुत्साहचर्य-मिन्द्रस्य। पुनः कैः सहेत्युच्यते। प्रातर्यावभिः प्रातरेव युञ्जन्तीति प्रातर्यावाणो देवविशेषाः तैः सह। देवेभ्यः प्रातर्यावभ्योऽनु ब्रूहीति हि प्रैषः[2]। यद्वा आदित्यप्राधान्यपक्षे इन्द्रः परमैश्वर्ययुक्तः सूर्यः। स चोद्यन् भ्राजभृष्टिभिः प्रकाशमानदीप्तिभिः प्रातरु-दयकाले जगन्मिश्रयद्भिः[3] मरुद्भिः सायं म्रियमाणैर्नश्यद्भिरस्थात्। एवमुत्तरमन्त्रेष्वपि योज्यम्।

अथ प्रत्यक्षवादः। हे इन्द्र त्वं दशसनिरसि—सनिर्दानम्—दशविधदानो भवसि। इतरदेवेभ्योऽपि बहुप्रदो भवसीत्यर्थः। अथवा दशदिक्षु संभक्तासि। यत एवं-विधोऽतो दशसनिमुक्तविधं मा मां कुरु। तदर्थञ्च त्वामाविशामि उपधावामीत्यर्थः। त्वमपि मामाविश सम्यगनुकूलो भवेत्यर्थः ॥६॥

**उद्यन् भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात् सान्तपनेभिरस्थात्।**
**शतसनिरसि शतसनिं मा कुर्वा त्वा विशाम्या मा विश ॥७॥**

[ पा गृ २. ६. १६ द्रः । गो गृ ३. ४. २० ; खा गृ ३. १. १६ द्रः ]

**सान्तपनाः देवविशेषाः। तैः सहास्थादिति सम्बन्धः। सान्तपनेभिरिति बहुलं छन्दसि [पा ७. १. १०] इति भिस ऐस् न भवति। कुर्वा इत्ययमाङ् त्वा इत्यनेन व्यवहितोऽपि व्यवहिताश्चेति [पा १. ४. ८२] विशामीत्यनेन सह संबध्यते—आविशामि। एवम् आ मा विशेति मामाविशेत्यर्थः। शेषं पूर्ववत् ॥७॥**

अथ द्वितीयः—उद्यन् भ्राजभृष्टिभिरिति।

पूर्ववद् व्याख्यानम्। इयान् भेदः। सान्तपनेभिः सम्यक् [4]तपतीति सन्तपनो[4]

1 See *Ait. Br.* 3. 16.

2 *S. Br* 3.9.3.8 ; *Ait. Br.* 2.15

3 G जगत् प्रकाशयद्भिः

4 B[1], G तापयतीति सान्तपनो

मध्याह्नसूर्यः तत्सम्बन्धिभिः। तत्कालीनैर्माध्यन्दिनसवनगैरेतन्नामकैः देवैरिन्द्रोऽस्थात्[1]। दशसनिरित्यस्य स्थाने शतसनिरित्यूहेत्। यतः शतगुणितसनिरसि अतः शतसनिं मां कुर्वित्यर्थः ॥७॥

**उद्यन् भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात् सायंयावभिरस्थात्। सहस्रसनिरसि सहस्रसनिं मा कुर्वा त्वा विशाम्या मा विश ॥८॥**

[ पा गृ २. ६. १६. द्र: ; गो गृ ३. ४. २० ; खा गृ ३. १. १८ द्र: ]

सायंयावानः देवविशेषाः। शेषं पूर्ववत् ॥८॥

अथ तृतीयः—उद्यन् भ्राजभृष्टिभिरिति।

अत्रापि पूर्ववद् व्याख्यानम्। सायंयावभिरित्यूहः सहस्रसनिरिति च ॥८॥

**चक्षुरसि चक्षुष्ट्वमस्यव मे पाप्मानं जहि।**
**सोमस्त्वा राजाऽवतु नमस्तेऽस्तु मा मा हिंसीः ॥९॥**

[ गो गृ ३. ४. २२ ; खा गृ ३. १. १६ द्र: ]

अस्यानुष्टुप् छन्दः। सूर्योपस्थाने विनियोगः। सूर्यो देवता। अनेन सूर्यः प्रार्थ्यते।

हे भगवन् सूर्य प्रागुक्तेन प्रकारेण मे मम पाप्मानम् अनिष्टम् अवजहि अपजहि स्फोटयेति यावत्। किम्भूतः—यस्त्वं त्रैलोक्यस्यापि चक्षुः नेत्रभूतः असि भवसि। किञ्च लोकस्यापि चक्षुः दर्शनशक्तिः असि भवसि। किञ्च हे भगवन् सूर्य सोमः ब्राह्मणानामोषधीनां वा राजा पतिः त्वा त्वाम् अवतु आप्याययतु। तद्देवानामन्नमिति तद्धि देवा भक्षयन्त्युपजीवन्ति। ओषधि-रूपाश्चाहुतिद्वारेणाहृत्याप्यायते सूर्य इति कृत्वा। ते तुभ्यमुक्तविशेषणाय नमः अस्तु। मा प्रतिषेधे। मा मां मा हिंसीः मा हिंसिष्यसीत्यर्थः ॥९॥

1 The assocciation of the Sāntapana Maruts with the Mādhyandina Savana as also with Indra is related in the Brāhmaṇas: *Ś. Br.* (Kāṇva) 1. 5. 2. 3; (Mādhyandina) 2. 5. 3. 3: अथ मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं निर्वपति। *Gopatha Br.* II. 2. 23: अथ यन्मध्यन्दिने मरुतः सान्तपनान् यजति। ऐन्द्रं माध्यन्दिनम्। तस्मादेनानिन्द्रेणोपसंहितान् यजति. See also *Tāṇḍya Br.* 9. 7. 2.

अथोक्तमन्त्रत्रयसाधारणो भाग उच्यते—चक्षुरसि चक्षुष्ट्वमसीति ।

हे आदित्य त्वं चक्षुरसि वसूनां ख्यापयिताऽसि प्रकाशको वाऽसि । चक्षुः ख्यातेर्वा चष्टेर्वा इति निरुक्तम् [ ४. ३ ] । तथा त्वं चक्षुरसि जगतश्चक्षुःस्थानीयो भवसि । मे मम पाप्मानमवजहि पापं नाशय । त्वा त्वां सोमो राजा अवतु—अव रक्षणगतिप्रीतिदीप्त्यादौ—तर्पयतु । एष वै सोमो राजा देवानामन्नम्[1] तं देवा भक्षयन्तीति हि श्रुतिः । किञ्च ते तुभ्यं नमोऽस्तु । मा मां मा हिंसीः हिंसां मा कुरु ॥९॥

**मेखलामवमुञ्चत उदुत्तमं वरुण पाशमिति [ गो गृ ३. ४. २३ ] । तेनाधस्तान्मुञ्चेदप्रच्छिन्नमित्यर्थः ।**

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते[2] तवानागसो अदितये स्याम ॥१०॥

[ ऋ स १. २४. १५ ; वा स १२. १२ ; तै स १. ५. ११. ३ ; अ स ७. ८३. ३—अधा वय० ; हि गृ १. ६. १० ; गो गृ ३. ४. २३ ; खा गृ ३. १. २० द्र: ]

**त्रिष्टुबस्य च्छन्दः । शुनःशेपो द्रष्टा । मेखलामोक्षणे विनियोगः । अनया त्रिष्टुभा शुनःशेपस्त्रिभिः पाशैर्बद्धस्तद्विमोकाय वरुणं प्रार्थयामास ।**

**हे भगवन् वरुण अस्मत् अस्मत्सकाशात् उत्तमं कण्ठावस्थितं पाशम् बन्धनम् उच्छ्रथाय । उद्व्यवहितोऽपि श्रथायेत्यनेन क्रियापदेन संबध्यते छन्दसि व्यवहिताश्चेति [ पा १. ४. ८२ ] वचनात् । एवमव-वी अपि । उच्छ्रथायेति श्लथ शैथिल्ये इत्यस्य प्रार्थनायां लोण्मध्यमपुरुषैकवचने वर्णव्यत्ययेन लकारस्य रेफः । था इति छान्दसं दीर्घत्वम् । उच्छ्रथय ऊर्ध्वमवतारय । अस्मान्मां विमोचयेत्यर्थः । अधमं पादावस्थितम् अवश्रथय अधस्तादवतारय । मध्यमं च कटिदेशावस्थितं विश्रथय तत्रस्थमेव शिथिलीकुरु । अथ पाशविमोकानन्तरं शुनःशेपेन भूयोऽपि वरुणः प्रार्थ्यते—हे आदित्य । अदितेरपत्यमिति कृत्वा वरुण एवादित्यशब्देनोक्तः । तव प्रसादेन पाशत्रयमुक्ताः सन्तः तव व्रते कर्मणि परिचर्यालक्षणे वयम् अनागसः निरपराधाः नित्ययुक्ताः स्याम भवेम । न केवलं तव अदितये अदितेश्च देवमातुः**

1 *Ś. Br.* 1. 6. 4. 5 etc. 2 D[1] & S अथादित्य व्रते वयं

**व्रते कर्मणि नित्यं संलग्नाः। अदितये अदीनभावाय वा स्यामेति सम्बन्धः ॥१०॥**

उदुत्तममिति मेखलामोचने विनियुक्तः। तथा च सूत्रम् [खा गृ ३. १. २०]—उदुत्तममिति मेखलामवमुञ्चेदिति।

पाठस्तु—उदुत्तमं वरुण पाशमिति। त्रिष्टुबस्य च्छन्दः। वरुणो देवता। शुनःशेप ऋषिः।

अनया त्रिष्टुभा शुनःशेपस्त्रिभिर्वरुणपाशैर्बद्धस्तद्विमोक्षार्थं वरुणं प्रार्थयामास। बन्धस्य वरुणदैवत्यत्वात् स एव मेखलाया मोचने प्रार्थ्यते।

हे वरुण पापस्य वारयितर्देव त्वम् उत्तमं पाशं पाशवद्बन्धकं पापम् अस्मदस्मत्तः उत् अतिशयेन श्रथय शिथिलीकुरु। अकामकृतकामकृताभ्यासभेदेन त्वधममध्यमोत्तमत्वं पापस्य। यद्वा सुखच्छेद्यप्रयत्नच्छेद्यात्यन्ताच्छेद्यभेदेन पाशस्य त्रैविध्यम्। यद्वोत्तमं कण्ठावेष्टितम् उत् उपरि श्रथय। अधमं पादवेष्टितम् अव अवाङ्मुखं श्रथय। मध्यमं विश्रथय विविधं छिन्धि। अथैवं पाशे शिथिले सति वयं व्रतिनः हे आदित्य अदितेः पुत्र वरुण तव व्रते त्वद्विषयभूते कर्मणि। अदितये—दितिः खण्डनम्—अखण्डनाय अविनाशनाय पाशकृतबाधपरिहाराय। अनागसः स्याम अनपराधिनो भवेम। अथवा अदितये तव मातृभूतायै अदितिदेवतायै अनागसः स्याम। पुत्रहिताचरणेन मातुः प्रियत्वं सिद्धम् ॥१०॥

**ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा केशश्मश्रुरोमनखानि वापयीत शिखावर्जम्। स्नात्वाऽलङ्कृत्याहते वाससी परिधाय स्रजमाबध्नीत [गो गृ ३. ४. २५]।**

## श्रीरसि मयि रमस्व ॥११॥

[गो गृ ३. ४. २५; खा गृ ३. १. २३]

**यजुरिदम्। स्रग्बन्धने विनियोगः। श्रीर्देवता। हे माले श्रीः लक्ष्मीः त्वम् असि भवसि यत अतो मयि रमस्व मयि अवस्थानं कुरुष्वेत्यर्थः ॥११॥**

श्रीरसीत्ययं स्रग्बन्धने विनियुक्तः। सूत्रितं च [खा गृ ३. १. २१]—श्रीरिति स्रजं प्रतिमुञ्चेदिति। पुष्पमाल्यं वलयाकारं कृत्वा शिरसि धारयेदित्यर्थः।

पाठस्तु—श्रीरसीति। यजुरिदं स्रग्देवताकम्।

हे सुगन्धपुष्पमयि स्रक् त्वं मयि श्रीः असि श्रीरूपा भवसि धारयितॄणां श्रीजनकत्वात्। अतो रमस्व संक्रीडस्व ॥११॥

## नेत्र्यौ स्थो नयतं माम् ॥१२॥

[ गो गृ ३. ४. २६ ; खा गृ ३. १. २३ ]

**यजुरिदमुपानद्दैवतमुपानत्परिधाने विनियुक्तम्।**

**हे उपानहौ मां युवां नयतम् इष्टफलप्राप्तये देशान्तरं प्रापयतम्। कुतः—यतो नेत्र्यौ स्थः नयनशक्तिप्रदे युवाम्। नहि भवतीभ्यां विना पदमपि दातुं शक्यत इति ॥१२॥**

नेत्र्यौ स्थ इत्ययं पादुकाधारणे विनियुक्तः। सूत्रितं च [ खा गृ ३. १. २३ ]—नेत्र्यौ स्थ इत्युपानहाविति।

पाठस्तु—नेत्र्यौ स्थ इति। यजुरिदमुपानद्देवताकम्।

हे उपानहौ युवां नेत्र्यौ स्थः अभिमतदेशप्रापयित्र्यौ भवथः। अतो मां नयतम् आचार्यकुलात् पितृकुलं प्रति प्रापयतम् ॥१२॥

**वैणवं दण्डं गृह्णाति [ गो गृ ३. ४. २७ ]**

## गन्धर्वोऽस्युपाव उप मामव ॥१३॥

[ गो गृ ३. ४. २७ ; खा गृ ३. १ २४ द्र: ]

**दण्डग्रहणे विनियुक्तं दण्डदैवतमिदं यजुः। दण्डः प्रार्थ्यते—हे दण्ड त्वं माम् दुरितेभ्यः उपाव उप समीपे भूत्वा रक्ष। यतो गन्धर्वं आदित्यो गन्धर्वो वा[1] रक्षणसमर्थः। असि भवसि। आदित्यो यूप[2] इतिवदुपचारात् ॥१३॥**

गन्धर्वोऽसीत्ययं दण्डधारणे विनियुक्तः। सूत्रितं च [ खा गृ ३. १. २४ ]—वैणवं दण्डमादध्याद् गन्धर्वोऽसीति ॥

पाठस्तु—गन्धर्वोऽस्युपाव इति। यजुरिदं दण्डदेवताकम्।

हे वैणवदण्ड त्वं गन्धर्वोऽसि। गन्धर्व आदित्यस्तद्रूपो भवसि। अतो मामुपाव समीपे बाधकेभ्यो गोसर्पादिभ्यो रक्ष। दण्डस्यादित्यरूपेण स्तुतिः। प्रकाशकत्वोच्छ्रितत्व-बाधकपरिहारादिसाम्यादादित्यो यूप[2] इत्यादिवत् ॥१३॥

1　B[1] वाचा　　　　2　*T. Br.* 2. 1. 5. 2

आचार्यं सपरिषत्कमभ्येत्य वीक्षते [ गो गृ ३. ४. २८ द्रः ]

यक्षमिव चक्षुषः प्रियो वो भूयासम् ॥१४॥

[ गो गृ ३. ४. २८ ; खा गृ ७. १. २५ ]

यजुरिदमाचार्यपरिषदोर्वीक्षणे विनियुक्तम्। तावेव देवते। आचार्यः सपरिषत्क आशिषः प्रार्थ्यते—

हे आचार्य परिषत्समेत वः युष्माकं चक्षुषः लोचनानां प्रियः वल्लभः अहं भूयासम् भवानि। यक्षमिव यथा यक्षो दर्शनीयतया सर्वलोकचक्षुषां प्रियो भवति तद्वदहमपि युष्मच्चक्षुषामित्यर्थः ॥१४॥

यक्षमिवेत्ययमाचार्यपरिषदवलोकने विनियुक्तः। सूत्रितं च [ खा गृ ३. १. २५ ]— उपेत्याचार्यं परिषदं प्रेक्षेद् यक्षमिवेति ॥

पाठस्तु—यक्षमिव चक्षुष इति। यजुरिदमाचार्यपरिषद्देवताकम्।

यक्षः सौन्दर्यातिशयेन सर्वैः स्तुत्यो देवजातिविशेषः। तं यथा चक्षुःप्रियत्वेन सर्वे पश्यन्ति तद्वत्। हे आचार्यपरिषदः वो युष्माकं चक्षुषो लोचनस्य प्रियो भूयासम् ॥१४॥

उपोपविश्य मुख्यान् प्राणान् संमृशन् [गो गृ ३. ४. २९]

ओष्ठापिधाना नकुली दन्तपरिमितः पविः।
जिह्वे मा विह्वलो वाचं चारु माऽद्येह वादय ॥१५॥

[ गो गृ ३. ४. २९ ; खा गृ ३. १. २६ द्रः ]

अस्यानुष्टुप् छन्दो जिह्वा देवता मुखापिधाने विनियोगः। स्नातकेन जिह्वा प्रार्थ्यते।

हे जिह्वे इह अद्य कर्मणि प्रस्तुते मा मां वाचं वादय अव्यक्तां वाचमुच्चारय। कथम्—चारु शोभनं यथा भवति। किम्भूता त्वम्—ओष्ठापिधाना ओष्ठौ अपिधानं ढक्कनं यस्याः सा त्वमोष्ठापिधाना। नकुली नकुलीव चलस्वभावा यतस्त्वमतो मम वाचं वदतो मा विह्वलः—ह्वल ह्मल चलने— मा चलिष्यसि। त्वयि सम्यक् चलन्त्यां चारु वागुच्चारणं न भवतीति भावः। पुनरपि सैवोच्यते—पविः वज्रो भवतीति। किम्भूतः—दन्तपरिमितः दन्तावरण इत्यर्थः ॥१५॥

ओष्ठापिधानेत्ययं मुख्यप्राणाभिमर्शने विनियुक्तः। तथा च सूत्रम् [खा गृ ३. १. २६]— ओष्ठापिधानेति मुख्यान् प्राणानभिमृशेदिति ॥ मुखे भवाश्चक्षुःश्रोत्रनासिका मुख्याः प्राणाः।

पाठस्तु—ओष्ठापिधानेति। अस्यानुष्टुप् छन्दः। जिह्वा देवता।

हे जिह्वे त्वं वाचम् अस्मदीयं वचनं मा विह्वलः। ह्वल चलने। वचने विरुद्धचलनं मा कुरु। उच्चारणप्रतिकूलं दन्तोष्ठादिसम्बन्धं[1] मा कुर्वित्यर्थः। किं तर्हि—मा माम् अद्यास्मिन् दिन इहास्मिन् कर्मणि चारु रमणीयं वादय व्यक्तं वाचय। पुनर्जिह्वा विशिष्यते। ओष्ठापिधाना ओष्ठावपिधानं तिरोधानं यस्याः सा तथोक्ता। नकुली—दृष्टान्तप्रधानोऽयं निर्देशः—नकुलीव। सा यथा दन्तैः परिमितो व्याप्तो भवति तद्वद्दन्तपरिमितः। लिङ्गमविवक्षितं शाखान्तरे[2] दन्तैः परिवृतेत्याम्नानात्। किञ्च पविर्वज्रं तद्वत् तीक्ष्णधारेत्यर्थः ॥१५॥

**गोयुक्तं रथमुपसंक्रम्य पक्षसी कूबरबाहू वा पाणिना त्रयेणाभिमृशेत् [गो गृ ३. ४. ३१ द्र: ]। चतुर्थेनाधिरोहति।**

वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः।
गोभिः सन्नद्धो असि वीडयस्वास्थाता ते जयतु जत्वानि ॥१६॥

[ ऋ स ६. ४७. २६ ; अ स ६. १२५. १ ; वा स २६. ५२ ; तै स ४. ६. ६. ५ ;
आ गृ २. ६. ५ ; गो गृ ३. ४. ३१ ; खा गृ ३. १. २७, २८ द्र: ]

**अस्य त्रिष्टुप् छन्दो रथो देवता रथाभिमर्शनारोहणे विनियोगः। स्नातकेन रथः प्रार्थ्यते—**

**[3]वनस्पतिविकारत्वाद्वनस्पतिशब्देन रथ एवोच्यते। हे वनस्पते रथ त्वं वीड्वङ्गः विड्वनि[4] दृढानि महाभारवहनसमर्थानि अङ्गानि नाभिचक्रकूबरप्रभृतीनि यस्य सः तथा भूयाः भव। दीर्घत्वं छान्दसम्[4]। हि पादपूरणे।**

1 M[1] दन्तोष्ठादिबन्धनं

2 *Ait. Ār.* 3. 2. 5 reads thus:
ओष्ठापिधाना नकुली दन्तैः परिवृता पविः।
सर्वस्यै वाच ईशाना चारु मामिह वादयेत् ॥
The recital of the verse gives the tongue a good power of speech.

3 A and I omit the portion from this place up to the middle of the *Bhāṣya* on 1. 8. 2 ending in आज्यस्य प्रधानस्य.

4 वीड्डु with the long ī is however found enumerated in the *Nighaṇṭu* ( 2. 9. 14 ) among the synonyms of strength.

अस्मत्सखा अस्माकं मित्रं भूयाः। तथा प्रतरणः प्रकर्षेण तरन्ति दुर्गाणि आपदो वा येन स तथा। तथा सुवीरः शोभनो वीरः सारथिर्यस्य सः। किम्भूतः—गोभिः बलीवर्दैः सन्नद्धः युक्तः गोचर्मभिर्वा सन्नद्धः। असि। यतस्त्वमेवम्भूतोऽतोऽस्मान् वीडयस्व। वीडुशब्दो दृढवचनः। दृढावयवान् कुर्वित्यर्थः। किञ्च आस्थाता आरोढा ते तव सम्बन्धी जयतु वशीकरोतु। जेत्वानि जेतव्यानि द्विषद्वृन्दानि ॥१६॥

इति भट्ट-गुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये
प्रथमप्रपाठके सप्तमः खण्डः ॥

वनस्पत इत्यस्य पादत्रयेण रथमभिमृशेत्। चतुर्थपादेन तमारोहेत्। तथा च सूत्रम् [खा गृ ३. १. २७, २८]—गोयुक्तं रथमालभेद् वनस्पत इत्यास्थाता त इत्यारोहेदिति ॥

पाठस्तु—वनस्पते वीड्वङ्ग इति। त्रिष्टुबस्य च्छन्दः। रथो देवता ॥

हे वनस्पते वनस्पतिविकार रथ त्वं वीड्वङ्गो हि भूयाः। वीडूनि दृढानि महारथवहनसमर्थानि अङ्गानि चक्रप्रभृतीनि यस्य स त्वं स्थिराङ्गो भव। किञ्च अस्मत्सखा वयं सखायो यस्य स तथोक्तः। प्रतरणः प्रकर्षेण मार्गस्य पारगः। सुवीरः सुष्ठु शत्रूणां वारयिता। प्रतिविशेषणं भूया इति सम्बध्यते। किञ्च त्वं गोभिः अनडुद्भिः सन्नद्धः सम्यक् बद्धोऽसि। यद्वा गोभिश्चर्मभिः सन्नद्धोऽसि। गोशब्दश्चर्मणि यास्केन प्रयुक्तः—अथापि चर्म च श्लेष्मा च। गोभिः सन्नद्धो असि वीडयस्वेति रथस्तुताविति[1]। यत एवमतो वीडयस्व दृढो भव। वीड्विति दृढनाम[2]। किञ्च ते त्वाम् आस्थाता अधितिष्ठन् पुरुषः जेत्वानि जेतव्यानि स्थानानि जयतु ॥१६॥

॥*॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणमन्त्रपर्वणि
प्रथमप्रपाठके सप्तमः खण्डः ॥*॥

---

1 *Nir*. 2. 5

2 See *Nir*. 9. 12

## अथ प्रथमप्रपाठके अष्टमः खण्डः

स्नातको 'गाः प्रकाल्यमाना अनुमन्त्रयेत' [गो गृ ३. ६. १]।

इमा मे विश्वतोवीर्यो[1] भव इन्द्रश्च रक्षतम् ।
पूषंस्त्वं पर्यावर्तयानष्टा आयन्तु नौ गृहान् ॥१॥

[गो गृ ३. ६. १; खा गृ ३. १. ४२ द्र:]

**गवामनुमन्त्रणे विनियोगः। भवेन्द्रौ देवते। इमा मे मम गाः भवो महादेवः इन्द्रश्च रक्षतम्। किंविशिष्टः—विश्वतोवीर्यः सर्वतोबली। अनेन भवेन्द्रयो रक्षणसामर्थ्यं कथितं भवति। हे पूषन् देव एनाः पर्यावर्तय आनय। एवं च युष्मत्प्रसादेन नः अस्माकं गृहान् आयन्तु आगच्छन्तु। अनष्टाः अनपहृताः ॥१॥**

अथ कृतस्नातकव्रतस्य पशुवृद्धिकामस्य पशुवृद्धिकामार्थं केचन कल्पाः सूत्रकारेणोक्ताः। तत्र विहिता मन्त्रा व्याख्यायन्ते। तत्रेमा म इत्यस्य प्रातर्गृहाद्गवां निष्क्रमणे विनियोगः। तथा च सूत्रम्[2]—इमा म इति पशुवृद्धिकामः प्रातर्गृहान्निर्गमयेदिति।

पाठस्तु—इमा मे विश्वत इति। अनुष्टुबस्य च्छन्दः। भवेन्द्रपूषाणो देवताः।

मे मम सम्बन्धिनीः इमा गाः पुरतो वर्तमानाः विश्वतोवीर्यौ सर्वतो व्याप्तसामर्थ्यौ भवः पशुपती रुद्रः इन्द्रश्चोभौ देवौ रक्षतं पातम्। हे पूषन् पुष्ट्याद्यभिमानिन्[3] देव त्वं तु प्रचारदेशादस्मादस्मदीयं गृहं प्रति गाः पर्यावर्तय। ताश्चानष्टा नाशरहिताश्चोरव्याघ्रादिभिरनपहृता नोऽस्माकं गृहानायन्तु आगच्छन्तु ॥१।

**प्रत्यागता अनुमन्त्रयेत**[4]

इमा मधुमतीर्मह्यमनष्टाः पयसा सह ।
गाव आज्यस्य मातर इहेमाः सन्तु भूयसीः ॥२॥

[गो गृ ३. ६. २; खा गृ ३. १. ४३ द्र:]

**अस्यानुष्टुप् छन्दः। गवां प्रत्यनुमन्त्रणे विनियोगः। गावो देवताः।**

1 Sāyaṇa explains विश्वतोवीर्यौ.

2 The passage is from Rudraskanda's *Bhāṣya* on *Kh. Gṛ.* 3. 1. 42. The sūtra itself reads पुष्टिकामो गाः प्रकालयेतेमा म इति.

3 M[1], G पूषाभिमानिन्

4 See *Go. Gṛ.* 3. 6. 2.

**इमा गावः मह्यम् इह गृहे अनष्टाः क्षीरेण सह भूयसीः बहुतराः सन्तु भवन्त्वित्येतत् स्नातकेन प्रार्थ्यते। किम्भूताः—मधुमतीः मधु उत्तमो रसो दुग्धादिस्तद्वतीः। भूयोऽपि विशिनष्टि—आज्यस्य प्रधानस्य[1] हविषः मातरः उत्पादयित्र्यः ॥२॥**

इमा मधुमतीरित्ययं प्रत्यागतानां गवां प्रवेशने विनियुक्तः। तथा च सूत्रम् [खा गृ ३. १. ४३]—प्रत्यागता इमा मधुमतीरिति॥ अभिमन्त्रयेदिति शेषः।

पाठस्तु—इमा मधुमतीर्मह्यमिति। अस्यानुष्टुप् छन्दः। उक्ता एव देवताः।

हे भवादयो देवाः इमा गावो मह्यं मदर्थं मधुमतीर्मधुमत्यः अनष्टाः अविनाशिताः सत्यः पयसा क्षीरेण सह सहिताः सञ्चारप्रदेशादागच्छन्तु। किञ्चागता इमा गावः आज्यस्य मातरो निर्मात्र्यः इहास्मिन् गोष्ठे भूयसीः बह्व्यः अपत्याद्युत्पादनेन सन्तु भवन्तु ॥२॥

**पुष्टिकामः प्रथमजातस्य वत्सस्य प्राङ्मातुः प्रलेहनाज्जिह्वया ललाटमुल्लिह्य निगिरेत् [गो गृ ३. ६. ३]**

**गवां श्लेष्मासि गावो मयि श्लिष्यन्तु ॥३॥**

[ गो गृ ३. ६. ३ ; खा गृ ३. १. ४४ द्रः ]

**यजुरिदं वत्सललाटलेहने विनियुक्तं श्लेष्मदेवताकम्।**

**गवां श्लेष्मा श्लेष्मकम् असि भवसि यतोऽतो गावो मयि श्लिष्यन्तु अवस्थानं कुर्वन्त्वित्यर्थः ॥३॥**

अथापरः [ कल्पः ]—पुष्टिकाम एव प्रथमजातस्य प्राङ्मातुः प्रलेहनाल्ललाटमुल्लिह्य निगिरेद्गवामिति [ खा गृ ३. १. ४४ ] सूत्रोक्तनिगिरणे गवां श्लेष्मासीत्यस्य विनियोगः।

पाठस्तु—गवां श्लेष्मासीति। यजुरिदं मन्त्रप्रतिपाद्यमानदेवताकम्।

हे निगीर्यमाणपदार्थ त्वं गवां श्लेष्मासि वत्सललाटश्लिष्टद्रव्यत्वाद्गवां श्लेष्मासीत्युच्यते। यत एवमतो मयि गावः श्लिष्यन्तु उपश्लिष्टा भवन्तु। सर्वदा गोष्ठे [2]प्रवसन्त्यो मा नश्यन्त्वित्यर्थो[2] युष्मदनुग्रहात् ॥३॥

1 The whole portion beginning with वनस्पतिविकारत्वात् under 1. 7. 16 ending here in प्रधानस्य is omitted in A and I.

2 B[1] प्रयसन्तामाश्लिष्यन्त्वित्यर्थः ; G प्रावसन्नात्मानं श्लिष्यन्त्वित्यर्थः

**गोष्ठेऽग्निमुपसमाधाय विलयनं जुहुयात् [गो गृ ३. ६. ४]**

संग्रहण संगृहाण ये जाताः पशवो मम ।
पूषैषां शर्म यच्छतु यथा जीवन्तो अप्ययात्[1] ॥४॥

[ गो गृ ३. ६. ४ ; खा गृ ३. १. ४५ द्रः ]

**अस्यानुष्टुप् छन्दः । विलयनहोमे विनियोगः । पूषा देवता ।**

**हे विलयन-संग्रहण मम गृहे ये जाताः पशवो गावः तान् संगृहाण उपादत्स्व तेषामुपादानं कुर्वित्यर्थः । एषां च एभ्यः पूषा आदित्यः शर्म सुखं तथा यच्छतु यथा जीवन्तः प्राणान् धारयन्त एते अप्ययात् आप्यायन्ते वर्धन्त इति यावत् ॥४॥**

संग्रहणेत्ययं निगिरणानन्तरभाविविलयनहोमे विनियुक्तः । तथा च सूत्रम् [ खा गृ ३. १. ४५ ]—संप्रजातासु गोष्ठे निशायां विलयनं जुहुयात् संग्रहणेति ॥

पाठस्तु—संग्रहण संगृहाणेति । अनुष्टुबस्य च्छन्दः । पूषा पशुपतिर्वा देवता ।

हे संग्रहण गवां संग्रहाभिमानिन् देव पूषन् संगृहाण संग्रहं कुरु । कानिति तानाह । ये पशवो वत्सा मम गोभ्यो जाता उत्पन्नास्तान् । अथ स एवार्थोऽर्थात् परोक्षेणोच्यते । पूषा गवां पोषको देवः एषां पशूनां शर्म सुखं यच्छतु करोत्वित्यर्थः । यद्वैवं योज्यम् । हे संग्रहणकर्तः पशुपते त्वं संगृहाण संगृहीतानां पूषा तु शर्म यच्छत्विति । शर्मदानप्रकारमाह । यथा येन प्रकारेण अप्ययात् अप्ययो नाशस्ततो वियुक्ताः जीवन्तो भवन्ति तथैषां शर्म यच्छतु ॥४॥

**पुष्टिकाम एव सम्प्रजातास्वौदुम्बरेणासिना वत्समिथुनयोर्लक्षणं करोति पुंस एवाग्रेऽथ स्त्रियाः [गो गृ ३. ६. ५]**

भुवनमसि साहस्रमिन्द्राय त्वा सृमोऽददादक्षतमरिष्टमिलान्दम् ।
गोपोषणमसि गोपोषस्येशिषे गोपोषाय त्वा सहस्रपोषणमसि
सहस्रपोषस्येशिषे सहस्रपोषाय त्वा ॥५॥[2]

[ गो गृ ३. ६. ५ ; खा गृ ३. १. ४६ द्रः ]

1 Apyayān in D[1] is supported neither by Guṇ nor by Sāy.

2 The Mantra is found in S and D[1] split up into two with separate numbers, the second part beginning with गोपोषणमसि. The Bhāṣyakāras, following *G. Gṛ.* and *Kh. Gṛ.*, have however taken the whole Mantra as a single unit.

निगदोऽयं वत्समिथुनलक्षणकरणे विनियुक्तः शास्त्रदेवताकः ।

हे औदुम्बर असे भुवनम् उत्पादकम् साहस्रं सहस्रनिमित्तं त्वं पशूनाम् असि भवसि । किञ्च त्वष्टा देवः त्वा त्वाम् इन्द्राय अददात् दत्तवान् । एवम्भूतं त्वामहं गोपोषाय गवां पुष्ट्यै गृहीतवान् यस्त्वं गोपोषणमसि गवां पुष्टिकरः। त्वया ह्यङ्किताः पशवो न नश्यन्ति। किञ्च गोपोषस्य गवां पुष्टेः वृद्धः त्वमेव ईशिषे त्वमेव प्रभुरीश्वरः त्वदधीनत्वादेतेषाम्। किञ्च हे असे सहस्रपोषाय त्वा त्वाम् अहं गृहीतवानिति सम्बन्धः। यस्त्वं सहस्र-पोषणमसि भवसि सहस्रसंख्यकान् पशून् करोषि। सहस्रपोषस्य गोसहस्र-संख्यापूरणस्य ईशिषे स्वामी भवसि। किम्भूतञ्चेदं गोपोषणम्—अक्षत-मक्षीणं प्रवाहरूपतया। रिष्टं व्याध्याद्यभिभवनं न विद्यते येन सता तत् अरिष्टमारोग्यहेतुरित्यर्थः। इलान्दम् इलायाः पृथिव्या अन्नहेतुत्वादन्नदं जीवनहेतुः। इला इडा तस्या या हविर्लक्षणमन्नं तत्प्रभवत्वादाज्य-व्रीह्यादेः ॥५॥

अथापरः कल्पः। पुष्टिकामस्यैव भुवनमसीत्ययं वत्समिथुनयोः कर्णे लक्षणकरणे विनियुक्तः। तथा च सूत्रम् [ खा गृ ३. १. ४६ ]—अथापरं वत्समिथुनयोः कर्णे लक्षणं कुर्याद् भुवनमिति ॥

पाठस्तु—भुवनमसि साहस्रमिति। अस्य निगदरूपत्वान्न च्छन्दोऽस्ति। मन्त्रप्रतिपाद्य-लक्षणकरणीयवत्समिथुनं देवता।

हे वत्समिथुन त्वं भुवनमसि पश्वभिवृद्धेरुत्पादकं भवसि। तथा साहस्रं सहस्र-संख्यायाः साधनं भवसि। अनेन लक्षणकरणेन व्याध्याद्यभावात् पश्वभिवृद्धेरुक्तरूपत्वम्। किञ्च त्वा त्वाम् इन्द्राय पश्वभिमानिदेवाय त्वष्टा देवः अददात् दत्तवान्। किञ्च त्वमक्षतमक्षीणं भवसि। तथा अरिष्टं वृकव्याघ्रादिभिरहिंसितमसि। तथा इलान्दं इला अन्नं क्षीरादिलक्षणं तस्य प्रदातासि। गोपोषणमसि गवां पोषकं भवसि। मिथुन-रूपत्वात्तद्वत्सोत्पादनद्वारा गोपोषणं प्रसिद्धम्। यत एवमतो गोपोषस्य गवां पुष्टेः ईशिषे ईश्वरं भवसि। अत एव कारणात् हे वत्समिथुन त्वा त्वां गोपोषाय गवां पुष्ट्ये चिह्नयुक्तं करोमीत्यर्थः। किञ्च त्वं सहस्रपोषणमसि। सहस्रसंख्याकगोपोषणं भवसि। शिष्टं पूर्ववन्नेयम् ॥५॥

**कृत्वा चानुमन्त्रयेत [ गो गृ ३. ६. ६ ]**

**लोहितेन स्वधितिना मिथुनं कर्णयोः कृतम् ।**
**यावतीनां यावतीनां व ऐषमो लक्षणमकारिषम् ।**
**भूयसीनां भूयसीनां व उत्तरामुत्तरां समां क्रियासम् ॥६॥**

[ अ स ६. १४१. २—कर्णयोः कृधि—द्रः । गो गृ ३. ६. ६ ;
खा गृ ३. १. ४८ द्रः ]

**निगदोऽयं कृतस्य लक्षणस्यानुमन्त्रणे विनियुक्तो गोदेवताक आशीर्वादपरः । हे गावः वः युष्माकं लोहितेन लोहितवर्णेन स्वधितिना औदुम्बरेणासिना खड्गेन दात्रेण वा मिथुनं कर्णयोः कृतं लक्षितं यावतीनां यावतीनां गवां वः युष्माकम् ऐषमः अस्मिन् वर्षे लक्षणं चिह्नम् अकारिषम् कृतवानस्मि । भूयसीनां भूयसीनाम् अधिकानामधिकानां वः युष्माकम् उत्तरामुत्तरां समाम् उत्तरस्मिन्नुत्तरस्मिन् संवत्सरे क्रियासम् । आशिषि लिङ् ॥६॥**

लक्षणकरणानन्तरं लोहितेनेत्यनेन वत्समिथुनमामन्त्रयेत । तथा च सूत्रम् [ खा गृ ३. १. ४८ ]—लोहितेनेत्यनुमन्त्रयेत ॥ तूष्णीमन्यासामिति[1] ।

पाठस्तु—लोहितेन स्वधितिनेति । निगदोऽयं गोमिथुनदेवताकः ।

लोहितेन लोहितवर्णेन अयःसारमयेन स्वधितिना छेदनसाधनेनायुधेन मिथुनं वत्समिथुनं कर्णयोः कृतम् । छेदनात्मकं लक्षणमिति शेषः । तदेवाह—हे गावः ऐषमः अस्मिन् संवत्सरे सद्यः परुत्परार्यैषम [ पा ५. ३. २२ ] इत्यादिनायं निपातितः । यावतीनामिति कार्त्स्न्यार्थे वीप्सा । सर्वासां वो युष्माकं लक्षणम् अकारिषं कृतवानस्मि । तथोत्तरामुत्तरां समामुपर्युपरि संवत्सरेऽपि भूयसीनां भूयसीनामस्मिन् संवत्सरे चिह्नीकृतानामपि बह्वीनां वो युष्माकं क्रियासम् । मिथुनानां लक्षणमिति शेषः ॥६॥

1 See Rudra on *Kh. Gṛ.* 3. 1. 48.

तन्तीं प्रसार्यमाणां बद्धवत्सां चानुमन्त्रयेत [गो गृ ३. ६. ७]

इयं तन्ती गवां माता सवत्सानां निवेशनी ।
सा नः पयस्वती दुहा[1] उत्तरामुत्तरां समाम् ॥७॥

[ गो गृ ३. ६. ७ ; खा गृ ३. १. ४६ द्रः ]

अनुष्टुबस्य च्छन्दः । गवां तन्त्यनुमन्त्रणे विनियोगः । तन्त्येव देवता । येयं प्रत्यक्षा तन्ती बन्धनरज्जुः गवां सवत्सानां माता पालयित्री निवेशनी ग्रहभूता सा तन्ती नः अस्माकम् उत्तरामुत्तरां समाम् उत्तरोत्तरं वर्षं पयस्वती क्षीरवती सती दुहा दुग्धाम्—दुह प्रपूरणे—कामान् पूरयतु ॥७॥

इति भट्ट-गुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये प्रथमप्रपाठके
अष्टमः खण्डः ॥
॥ समाप्तोऽयं प्रथमः प्रपाठकः ॥

इयं तन्तीत्ययं निर्गतासु गोषु तद्बन्धनार्थं रज्जुभिमन्त्रणे विनियुक्तः । सूत्रितं च [ खा गृ ३. १. ४६ ]—तन्तीं प्रसारितामियं तन्तीति ॥

पाठस्तु—इयं तन्ती गवामिति । अनुष्टुबस्य च्छन्दः । तन्ती देवता ।

इयं तन्ती गोबन्धनार्थं प्रसारिता रज्जुः गवां माता निर्मात्री । बद्धानां पलायना-पहारादिराहित्येन प्रवृद्धिसम्भवात् तन्त्या निर्मात्रीत्वम् । किञ्च सवत्सानां गवां निवेशनी

1 दुहा along with the entire line occurring four times in this *Brāhmaṇa* (1. 8. 7 ; 2. 2. 1; 2.2.14 ; 2.8.1) is read here by Sāyaṇa as दुहाम् which is the reading found also in *Ṛv.* 4. 57. 7 ; *Av.* 3.10.1; 3.17.4 and *Kāṭhaka* 39. 10. Guṇa-viṣṇu refers to this variant reading in his *Bhāṣya* on 2. 2. 14 *infra* : शाखान्तरे दुहामेव पाठः. *T. S.* 4. 3. 11. 5 and *P. Gṛ.* 3. 3. 5 have धुक्ष्व for दुहाम्, while *Maitrāyaṇī* 2. 13. 10; 2. 16. 13 has दुहे instead. The authors of the *Vedic Variants*, vol. I. p. 59 observe that the readings दुहा and दुहे are doubtful.

स्थापयित्री। अथ परोक्षेणाह। सा तन्ती पयस्वती पयस्विनी गोद्वारा। तद्बन्ध उपयुक्ता सतीत्यर्थः। उत्तरामुत्तरां समाम् उत्तरस्मिन्नुत्तरस्मिन् संवत्सरे नः अस्मदर्थं दुहां दुह्यात्[1]। क्षीरमिति शेषः। पश्वभिवृद्धिं करोत्वित्यर्थः ॥७॥

॥*॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणमन्त्रपर्वणि प्रथमप्रपाठके अष्टमः खण्डः ॥*॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

॥●॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्य-धुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणे मन्त्रपर्वणि प्रथमः प्रपाठकः[2] ॥●॥

---

1 See *infra*—Sāyaṇa on Mantras 2. 2. 1 ; 2. 2. 14 ; 2. 8. 1.

2 In B[1] and G this First Division is called Adhyāya instead of Prapāṭhaka.

# द्वितीयः प्रपाठकः

## अथ द्वितीयप्रपाठके प्रथमः खण्डः

**सकृत् संगृहीतान् दर्व्या सक्तून् कृत्वा पूर्वे उपलिप्त उदकं निनीय बलिं निवपति [ गो गृ ३. ७. १३ ]**

यः प्राच्यां दिशि सर्पराज एष ते बलिः ॥१॥

यो दक्षिणस्यां दिशि सर्पराज एष ते बलिः ॥२॥

यः प्रतीच्यां दिशि सर्पराज एष ते बलिः ॥३॥

य उदीच्यां दिशि सर्पराज एष ते बलिः ॥४॥

[ गो गृ ३. ७. १३ ; खा गृ ३. २. २ द्रः ]

**प्राच्यामित्यादीनि चत्वारि यजूंषि सर्पबलौ विनियुक्तानि सर्पदेवताकानि निगदव्याख्यातानि ॥१-४॥**

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ सर्पबलिमन्त्राः ॥ श्रावण्यां पौर्णमास्यामित्यादिनोक्ते[1] सर्पबलौ यः प्राच्यामित्यादि-मन्त्रचतुष्टयस्य विनियोगः । तथा च सूत्रम् [ खा गृ ३. २. २ ]—सकृद्गृहीतान् सक्तून् दर्व्यां कृत्वा पूर्वोपलिप्ते निनीयापो यः प्राच्यामिति बलिं निवपेत् ॥ एवं प्रतिदिशं यथालिङ्गमिति[2] ॥

पाठस्तु—यः प्राच्यामित्यादिः । यजुर्मन्त्रा एते सर्पदेवताकाः ।

हे सर्पराज सर्पाणां पते यः प्रसिद्धस्त्वं प्राच्यां दिशि वर्तसे ते तुभ्यमेष सक्तुमयः पदार्थो बलिः पूजासाधनम् । तेन तुष्टो भवेत्यर्थः । एवमुत्तरेष्वपि योज्यम् ॥१-४॥

1 *Kh. Gṛ.* 3. 2. 1

2 See *Kh. Gṛ.* 3. 2. 4.

पश्चादग्नेर्भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्य जपति [गो गृ ३. ७. १७]

नमः पृथिव्यै दंष्ट्राय विश्वभृन्मा [1]ते अन्ते[1] रिषाम ।
संहतं मा वि वधीर्विहतं माऽभि सं वधीः ॥५॥

[ गो गृ ३. ७. १७; खा गृ ३. २. ६ द्र: ]।

अनुष्टुबस्य च्छन्दः। भूमिजपे विनियोगः। अग्निर्देवता।

हे अग्ने विश्वभृत् आहुतिद्वारेण जगत्पोषक तुभ्यं नमः। किम्भूताय— पृथिव्यै पृथिव्या दंष्ट्राय। दंष्ट्रायाश्छान्दसं ह्रस्वत्वम्। पृथिव्या अग्निर्दंष्ट्राभूतः प्रधानभूतः लोकपालपितृत्वेन[2]। ते तव अन्ते समीपे स्थिता वयं मा रिषाम मा विनश्येमेति सर्पादिभ्यः प्रार्थ्यते। किञ्च संहतं सङ्गतम् अस्माभिः सह। वि विविधं त्वं मा वधीः मा स्फोटयिष्यसि। विहतं वियुक्तमपि समभि सम्यगाभिमुख्येन प्रत्यागतं त्वं मा वधीः [3]मा अपनैषीरित्यर्थः[3] ॥५॥

सर्पबलिप्रदानानन्तरभाविभूस्पर्शनजपे नमः पृथिव्या इत्ययं विनियुक्तः। तथा च सूत्रम् [ खा गृ ३. २. ६ ]—न्यञ्चौ पाणी कृत्वा नमः पृथिव्या इति जपेदिति ॥ अवाञ्चौ पाणी भूमौ निधाय जपेदित्यर्थः।

पाठस्तु—नमः पृथिव्या इति। अनुष्टुबस्य च्छन्दः। अग्निर्देवता।

हे अग्ने त्वं विश्वभृत् पाकप्रकाशादिदानेन विश्वस्य धारकोऽसि। तस्मै पृथिव्य दंष्ट्राय। षष्ठ्यर्थे चतुर्थी। पृथिव्या दंष्ट्राभूताय नमः। ते तव अन्ते समीपे वर्तमाना वयं मा रिषाम मा विनश्याम। समृद्धा भवामेत्यर्थः। त्वं च संहतं पुत्रधनादिसञ्चयं मा विवधीर्मा हिंसीः। वियुक्तं मा कुर्वित्यर्थः। तथा [4]विहतं [5]विश्लिष्टं दुरितादिकं[5] मा अभिसंवधीराभिमुख्येन मा संहतं[6] कुरु ॥५॥

1 D² तेऽन्ते
2 I लोकपालयितृत्वेन
3 D¹ ( p. 56 ) records only the corrupt readings with a note of exclamation: *māpanīṣir* (!) *ity arthaḥ.*
4 B¹, D², G & M¹ विहितं
5 B¹ अविस्पष्टं दुरितादिकं; D² बलीष्टहितकं ; G बलिष्टहिताकं
6 M¹ & M² संहितं

उत्तरतोऽग्नेर्दर्भस्तम्बं समूलं प्रतिष्ठाप्य जपति [ गो गृ ३. ७. २१ ]

सोमो राजा सोमस्तम्बो राजा सोमोऽस्माकं राजा सोमस्य वयं स्मः अहिजम्भनमसि सौमस्तम्बं सौमस्तम्बमहिजम्भनमसि ॥६॥

[ गो गृ ३. ७. २१ ; खा गृ ३. २. ७ द्र: ]

यां सन्धां समधत्त यूयं सप्तऋषिभिः सह ।
तां सर्पा माऽत्यक्रामिष्ट नमो वो अस्तु मा नो हिंसिष्ट ॥७॥

[ गो गृ ३. ७. २१ ; खा गृ ३. २. ७ द्र: ]

निगदाविमौ जपे विनियुक्तौ सोम-सर्प-देवताकौ। सोमो राजा ब्राह्मणानां राजा। सोमस्तम्बो दर्भस्तम्बो राजा अधिपतिः। सोमोऽस्माकं राजा। सोमस्य वयं स्मः परिग्रहत्वे भवामः। हे सौमस्तम्ब अहिजम्भनमसि सर्पाणां स्तम्भनं भवसि। सौमस्तम्बमिति पुनर्वचनमादरार्थम् ॥६॥

हे सर्पाः यां सन्धां सन्धिव्यवस्थां सप्तर्षिभिः सह यूयं समधत्त सम्यग् धृतवन्तः तां व्यवस्थां मा अत्यक्रामिष्ट मा अभिद्रुहः। माङि लुङ् [ पा ३. ३. १७५ ]। बहुलं छन्दसीति [ पा ६. ४. ७५ ] माङ्योगेऽप्यडागमः। यूयं माऽतिक्रामतेति प्रार्थ्यते। नमः वः युष्मभ्यम् अस्तु। मा नो हिंसिष्ट तां व्यवस्थामुल्लङ्घ्य मा नः अस्मान् हिंसिष्ट। यूयं न हिंसतेति प्रार्थ्यते ॥७॥

सोमो राजेत्ययं दर्भस्तम्बोपस्थाने विनियुक्तः। तथा च सूत्रम् [ खा गृ ३. २. ७ ]—तत उत्थाय सोमो राजेति दर्भस्तम्बमुपस्थायेति[1] ॥

पाठस्तु—सोमो राजा सोमस्तम्ब इति। यजुर्निगदोऽयम्। सोमस्तम्बो देवता।

तत्र सोमस्यौषधिस्वामित्वाद्दर्भस्तम्बः सोमत्वेन स्तूयते। अत एव मन्त्रविनियोगयोर-वलक्षण्यम्। [2]सोमो देवो राजा त्वविशेषात्[2] सर्वस्य स्वामी ओषध्यादीनां प्रवृद्धेश्चन्द्राधी-नत्वात्[3]। अथ स एवौषधिरूपेण स्तूयते। सोमस्तम्बो राजा सर्वेषामोषधिवनस्पत्यादीनां स्वामी। श्रेष्ठ इत्यर्थः। स सोमोऽस्माकमपि विशेषेण राजा। सोमोऽस्माकं ब्राह्मणानां

1 M[1] & M[2] ०स्तम्ब उपस्थायेति
2 B[1] सोमदेवराजात्वमविशेषात् ; D[2] सोमो देवराजत्वविशेषात् ; G सोमो राजत्वविशेष्यात्
3 D[2] प्रवृद्धचन्द्राधीनत्वात्

राजेति श्रुत्यन्तरम्[1]। यत एवमतः सोमस्य वयं स्मः भवामः। अधीना इति शेषः। हे दर्भस्तम्ब सौमस्तम्बं सोमस्तम्बसम्बन्ध्यहिजम्भनमसि। आगत्य [2]हन्तीत्यहयः सर्पाः। तेषां जम्भनं हिंसकमसि। तदेव पुनरुच्यते। [3]सौमस्तम्बमहिजम्भनमसि। पूर्ववद् योज्यम् ॥६॥

स्तम्बस्थान् सर्पान् मनसा ध्यायन् यां सन्धामिति नमस्कुर्यान्मन्त्रलिङ्गात्[4]।

पाठस्तु—यां सन्धामिति। यजुर्निगदोऽयं सर्पदेवताकः।

हे सर्पा यूयं सप्तर्षिभिर्मरीचिप्रमुखैः सह यां सन्धां यत् सन्धानं मैत्रीं समधत्त सम्यग् धृतवन्तस्तां सन्धां मात्यक्रामिष्टातिक्रमं मा कुरुत। अस्माभिः सहेति शेषः। हे सर्पा वो युष्माकं नमो नमस्कारोऽस्तु। नोऽस्मान् मा हिंसिष्ट हिंसां मा कुरुत ॥७॥

**होममन्त्रान्तरं वक्ष्यति[5]।**

## मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान् मा नो रुद्र भामिनो[6] वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥८॥

[ वा स १६. १६—मा नो वीरान्, मा न आयुषि। तै स ३. ४. ११. २; ऋ स १. ११४. ८; काठ स २३. १२—मा न आयुषि, रुद्र भामितो। गो गृ ३. ८. २; खा गृ ३.३. २ द्रः ]

**जगतीयं होमे विनियुक्ता रुद्रदेवताका।**

**हे भगवन् रुद्र नः अस्माकं तोके अपत्ये पौत्रादिविषये तनये पुत्रे आयौ आयुषि प्राणधारणे। छन्दसीण [ उ १. २ ] इत्युण्प्रत्ययान्त उकारान्तोऽप्यायुशब्दोऽस्ति। गोषु अश्वेषु मा रीरिषः। रुष रिष हिंसार्थे। हिंसां मा कृथाः। मा नो विनाशं करिष्यसीत्यर्थः। हे रुद्र नः अस्माकं वीरान् विक्रान्तान् मनुष्यान् भामिनः[6] वर्चस्विनः मा वधीः मा हनिष्यसि। किमिति —येन वयं हविष्मन्तः यजन्तः सदम् सदा नित्यम्। इत् पादपूरणार्थः। त्वा त्वां हवामहे आह्वयामः। यागकाले तुभ्यं भागं दद्म[7] इत्यर्थः। पुनः पुनर्मा नो वचनं प्रार्थनदार्ढ्यार्थम् ॥८॥**

1 *V. S.* 9. 40; *Ś. Br.* 5. 4. 2. 3
2 D[2] & G भजन्तीत्यहयः
3 M & M[2] दीर्घाय सोमस्तम्ब
4 See Rudra on *Kh. Gr.* 3. 2. 7
5 See *Go. Gr.* 3. 8. 2: तस्य जुहुयादा नो मित्रावरुणेति प्रथमां मा नस्तोक इति द्वितीयाम्.
6 Sāyaṇa explains the reading भामितः found in *Ṛv.* etc.
7 B[1] ददाम

सर्पबलेः श्रावण्यां पौर्णमास्यां विधानात् तत्कालप्रसङ्गेन सूत्रकारः सर्पबल्यनन्तरमध्यायोपाकरणोत्सर्गावुक्तवान्[1] पश्चाद्रुद्रबलिम्। आश्वयुजीं रुद्राय पायस इत्यादिनोक्ते[2] रुद्रबलौ मा नस्तोक इत्ययं होमे विनियुक्तः। तथा च सूत्रम् [ खा गृ ३. ३. २ ]—मा नस्तोक इति जुहुयात् प्रधानाहुतिमिति ॥

पाठस्तु—मा नस्तोक इति। जगत्यस्य च्छन्दः। रुद्रो देवता।

हे रुद्र। रुद् दुःखं दुःखहेतुः पापं वा। तद् द्रावयतीति रुद्रः। अथवा रौतीति रुद्रः। रुद्रो रौतीति सत इति निरुक्तम् [ १०. ५ ]। रुद्रो हि प्राणिनः सुखोपायमज्ञात्वा[3] दुःखे पतिष्यन्तीति सर्वदा रोदिति। हे तथाविध देव। नोऽस्माकं तोके स्त्रीपुंसामान्यवचनादपत्ये। तथा तनये तनोति विस्तारयति कुलमिति तनयः पुमपत्यमिति तस्मिन्। अथवा तोके पुत्रे तनये तत्पुत्रे च मा रीरिषो मा वधीः। एवं प्रत्युद्देशं मा रीरिष इति सम्बन्धः। किं च नोऽस्माकम् आयौ आयुषि जीवने। शाखान्तरे[4] आयुषीति पठन्ति। तथा नो गोषु नोऽश्वेषु मा रीरिषः। किं च हे रुद्र भामितः[5]—भाम क्रोधे—अस्माभिरन्यथाकरणाकरणादिदोषेण[6] क्रोधीकृतः सन् नोऽस्माकं वीरान् शत्रूणां विविधं वारयितॄन् भृत्यान् मा वधीर्मा हिंसीः। त्वा त्वामुक्तबाधपरिहाराय हविष्मन्तः प्रदेयैर्हविर्भिर्युक्ता वयं सदमित् सर्वदा हवामह आह्वयामः। [7]इत् पादपूरणे[7] ॥८॥

**इन्द्राग्निभ्यां स्वाहेति मुख्यां हविराहुतिं हुत्वा चतसृभिराज्याहुतिभिरभिजुहोति [ गो गृ ३. ८. १० ]**

**शतायुधाय शतवीर्याय शतोतयेऽभिमातिषाहे।**
**शतं यो नः शरदो [8]अजीज़ादिन्द्रो नेषदति दुरितानि**
**विश्वा स्वाहा ॥९॥**

[ तै स ५. ७. २. ३ ; काठ स १३. १५ ; मा श्रौ १. ६. ४. २१ ; पा गृ ३. १. २ ; गो गृ ३. ८. २० ; खा गृ ३. ३. ७ द्रः ]

**पङ्क्तिरस्य च्छन्दः। आज्यहोमे विनियोगः। इन्द्रो देवता।**

1 See *Kh. Gr.* 3. 2. 14-24.
2 See *Kh. Gr.* 3. 3. 1.
3 B[1], G & D[2] ॰पायं ज्ञात्वा
4 *V. S.* 16. 16 ; *T. S.* 3.4.11.2
5 *Ṛv.*, *T. S.* etc. have भामितः.
6 B[1], G & D[2] ॰रन्यथाकरणादिदोषेण
7 B[1], G & D[2] omit it.
8 Sāyaṇa adopts अजीयात्; *Kāṭha. S.* ऽनयत्; *M. Śr.* नयत्; *T. S.* अजीतान्; *P. Gr.* अजीजात्.

य इन्द्रः नः अस्माकम् अनेकापायहेतुत्वाच्छत्रुभूतायाः शरदः शतम् अजीजात्—जि अभिभवे—अभिभवति सुखेनातिवाहयति। यश्च नः दुरितानि दुरुत्तराणि व्यसनानि। विश्वा विश्वानि सर्वाणि। शेश्छन्दसि बहुलमिति [ पा ६. १. ७० ] शेर्लोपः। अतिनेषत् अतिनीतवान् अतिशयेन विनाशं नीतवानित्यर्थः। तस्मै इत्थम्भूतायेन्द्राय शतायुधाय बहुप्रकार-वज्राद्यायुधाय। शतवीर्याय बहुबलाय। शतोतये—अव रक्षणे। अवनम् ऊतिः रक्षणं पालनम्—जगतां बहुप्रकारपालनाय। अभिमातिषाहे अभिमातयः प्रतिपक्षाः वृत्रप्रभृतयो महासुराः तान् सहते पराजयते यः सोऽभि-मातिषाट्। छन्दसि सह इति [ पा ३. २. ६३ ] ण्विप्रत्ययः। स्वाहेति हविरभिधानम्। नमःस्वस्तिस्वाहेति [ पा २. ३. १६ ] स्वाहायोगाच्चतुर्थी। एवमुत्तरत्रापि ॥१॥

तत्कालपक्वैः[1] सस्यैः साध्ये नवयज्ञाख्ये कर्मण्यैन्द्राग्नः पायसः कार्यः। तत्र प्रधानाहुत्य-नन्तरभाविन्याज्यहोमे शतायुधायेत्यादिमन्त्रचतुष्टयस्य विनियोगः। तथा च सूत्रम् [खा गृ ३. ३. ७ ]—शतायुधायेति चतसृभिराज्यं जुहुयादुपरिष्टादिति ॥ प्रधानाहुतेरुपरिष्टा-दित्यर्थः।

तत्र प्रथमः शतायुधायेति। विष्टारपङ्क्तिरस्य च्छन्दः। इन्द्रो देवता।

शतायुधायास्मदरिष्टशमनार्थं [2]शतसंख्यायुधयुक्ताय। न केवलं बह्वायुधाय किंतु शतवीर्याय। शतमित्यपरिमितवचनम्। अपरिमितवीर्याय। [3]बह्वायुधप्रहरणसामर्थ्य-युक्तायेत्यर्थः। तथा शतोतये। ऊतिरवनम्। बहुविधरक्षणयुक्ताय। तथाभिमाति-षाहेऽभितो मातीनां[4] हिंसकानाम् अस्मच्छत्रूणामभिभवित्रे। इदमप्यस्तीति शेषः। किञ्च यो महानुभाव इन्द्रोऽस्ति स नोऽस्मान् शरदः शतं शतसंवत्सरमजीयादज्यात्[5]। अज गतिक्षेपणयोः। अन्तर्भावितण्यर्थोऽयम्। गमयत्वित्यर्थः। उक्ताद्धातोराशिषि लिङि यासुट्प्रत्ययस्य परत्वेऽपि लक्ष्यानुरोधेन पुनःप्रसङ्गविज्ञानाच्चेत्युक्तत्वात्[6] सीयुट्। छन्दस्युभय-थेति [ पा ३. ४. ११७ ] सार्वधातुकसंज्ञायां लिङः सलोप [ पा ७. २. ७६] इति सलोपः।

1 B¹, G & D² तत्तत्काल॰ ; see Rudra on *Kh. Gṛ*. 3. 3. 6.
2 D² & G शतसंख्यवज्राद्यायुध॰
3 D² बह्वायुधप्रेरण॰ ; G प्रेरणसमर्थाय
4 B¹, D² & G omit it.
5 Guṇ has explained अजीजात.
6 *Paribhāṣā* 40. See *Mahābhāṣya* on *Pāṇini* 1. 4. 2.

तथास्माकं विश्वा विश्वानि दुरितानि व्यसनान्यतिनेषदतिनयतु। यद्वा य[1] एवं कुर्यात्तस्मै शतायुधायेति समन्वयः ॥९॥

ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति।
तेषां यो अज्यानिमजीजिमावहास्तस्मै[2] नो देवाः परिदत्तेह
सर्वे स्वाहा ॥१०॥

[ तै स ५. ७. २. ३ ; पा गृ ३. १. २। गो गृ ३. ८. १० ; खा गृ ३. ३. ७ द्र: ]

स्वराट् त्रिष्टुबस्य च्छन्दः। आज्यहोमे विनियोगः। सर्वे देवताः।

हे सर्वे देवाः ये चत्वारः पथयः पन्थानः देवयानाः स्वर्गमार्गा आश्रमाः। तथा च श्रुतिः—त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्वे एते पुण्यलोका भवन्ति। ब्रह्मसंस्थोऽमृतत्वमेतीति[3]। देवत्वमित्यर्थः। अन्तरा मध्येन द्यावापृथिवी द्यावापृथिव्योः भूनभसोः। अन्तरान्तरेण युक्त इति [पा २. ३. ४] षष्ठ्यपवादो द्वितीया। वियन्ति विविधं गच्छन्ति। तेषां चतुर्णां पथां मध्ये यः पन्थाः अजीजिम्। जि ज्रि अभिभवे। न जीजिम-जीजिमनभिभवम् आवहाः आवहति प्रापयति। किम्भूतमजीजिम्—अज्यानिम् —ज्या वयोहानौ—न विद्यते ज्यानिर्हानिर्यस्यां तामज्यानिम्। क्षेमेणाभीष्टदेश अमृतत्वप्राप्तिहेतुम्। तस्मै इत्थम्भूताय पथे अस्मान् परिदत्त समर्पयत यूयम् इह कर्मणि प्रवृत्तान्। स्वाहेति हविरभिधानम् ॥१०॥

अथ द्वितीयः—ये चत्वार इति। त्रिष्टुबस्य च्छन्दः। देवा देवताः।

हे देवाः श्रुतिस्मृतिप्रसिद्धा ये चत्वारो देवयाना देवप्राप्तिसाधनाः[4] पथयः पन्थानोऽर्चिरादयो द्यावापृथिवी अन्तरा द्यावापृथिव्योर्मध्ये वियन्ति विविधं गच्छन्ति देवलोकपर्यन्तमायता वर्तन्ते। अन्तरान्तरेण युक्ते [ पा ३. २. ४ ] इति द्वितीया। तेषां मध्ये यः पन्थाः। अज्यानिमहानिमप्रच्युतिमजीतिम्[2]—छान्दसो दीर्घः—अजयमन्येषामभिभवा-

1 D² & G omit it.
2 Sāyaṇa reads ०मजीतिमावहात्तस्मै, but C supports Guṇ's readings. The Mantra with many other variants are found in different Vedic texts.
3 *Ch. Up.* 2. 23. 1
4 D² & G देवप्रयाणसाधनाः

भावम् आवहात् आवहति प्रापयति। यद्वा अज्यानिमजीतिमिति ज्या वयोहानावित्यस्यैव रूपद्वयमतो न पृथगर्थता। तस्मै मार्गाय हे सर्वे देवा नोऽस्मभ्यमिहास्मिन् कर्मणि परिदत्त प्रयच्छत ॥१०॥

ग्रीष्मो हेमन्त उत नो वसन्तः शरद्वर्षाः सुवितं नो अस्तु।
तेषामृतूनां शतशारदानां निवात एषामभये स्याम ॥११॥

[ तै स ५. ७. २. ४; पा गृ ३. २. २। गो गृ ३. ८. १०;
खा गृ ३. ३. ७ द्रः ]

विराट् त्रिष्टुबस्य च्छन्दः। आज्यहोमे विनियोगः। ऋतवो देवताः।

ग्रीष्म ऋतुः। हेमन्त ऋतुः। उत अप्यर्थः। वसन्तोऽपि। नः अस्माकं ब्राह्मणानां यज्ञियत्वेन ऋतुः। शरदृतुः। वर्षा ऋतुः। य एते यूयं निर्दिष्टास्ते मया प्रार्थ्यन्ते। यदिदं नः अस्माकं कर्म तद् युष्मत्प्रसादेन सुवितं सुकृतम् अस्तु भवतु। किञ्च य एते ऋतवस्तेषाम् ऋतूनाम्। कीदृशानाम्—शतशारदानाम्। शतं शारदा येषु ते शतशारदाः। अतस्तेषां निवाते आश्रये। कीदृशि—अभये निर्भये स्याम भवेमेति प्रार्थ्यते ॥११॥

अथ तृतीयः—ग्रीष्मो हेमन्त इति विराट्त्रिष्टुपछन्दस्क ऋतुदेवताकः।

ग्रीष्मादयः पञ्चोपदिष्टा[1] ऋतवः सन्ति तान् प्रार्थयते। नोऽस्माकं सम्बन्धि[2] दत्तं हविः सुवितं सुष्ठु प्रापितं[3] सुष्ठु हितं वा अस्तु भवतु। उताप्यर्थे। ग्रीष्मो ग्रस्यन्तेऽस्मिन् रसा वर्षा वर्षत्यासु पर्जन्यो हेमन्तो हिमवानित्यादि निरुक्तम् [४. २७] अत्र द्रष्टव्यम्। किञ्च तेषां पञ्चर्तूनाम्। कीदृशाम्—शतशारदानाम्। शतं शरदो[4] येषां ते शतशारदाः। यद्वा शरदि भवाः शारदाः शतं शारदाः शतशारदाः। तेषाम् [5]उक्तविधानामृतूनां निवाते वातरहिते अत एवाभये भयरहिते प्रदेशे। स्याम भवेम। शतायुषपर्यन्तं सर्वर्तुनिर्वृतिमनुभवेमेत्यर्थः ॥११॥

1 B[1] पंचानिष्टा; D[2] & G पंच निर्दिष्टा
2 D[2] & G ऋतुसम्बन्धि
3 D[2] प्रावितं
4 D[2] शारदा
5 B[1] एवंविधा०; D[2] & G विविधा०

**इद्वत्सराय परिवत्सराय संवत्सराय कृणुता बृहन्नमः।**
**तेषां वयं सुमतौ यज्ञियानां ज्योग्जीता[1] अहताः स्याम ॥१२॥**

[अ स ६. ५५. ३—इदावत्सराय, यज्ञियानामपि भद्रे सौमनसे स्याम। तै स ५. ७. २. ४; काठ स ३३. २५ द्रः। गो गृ ३. ८. १०; खा गृ ३. ३. ७; जै गृ २. ३ द्रः]

**विराट्त्रिष्टुबस्य छन्दः संवत्सरो देवता आज्यहोमे विनियोगः।**

**हे स्तोतारः येभ्य इद्वत्सरादिभ्यः कालविशेषेभ्यो यूयं बृहन्नमः हविः कृणुता कृणुत कुरुत तेषां वत्सराणां यज्ञियानां यज्ञार्हाणाम्। यज्ञर्त्विग्भ्यां घ-खञाविति [पा ५. १. ७१] यज्ञशब्दादर्हार्थे घप्रत्ययः। सुमतौ शोभनायां बुद्धौ वयं वर्तमानाः ज्योक् चिरं जीता जेतारो दुरितानाम्। अहता अपीडिताः शत्रुभिः। स्याम भवेमेति प्रार्थ्यते ॥१२॥**

अथ चतुर्थः—इद्वत्सरायेति। अस्यापि विराट्त्रिष्टुप् छन्दः संवत्सरादयो देवताः।

हे मदीयाः पुत्रादय ऋत्विजो वा यूयमिद्वत्सराय परिवत्सराय संवत्सराय च देवाय बृहत् प्रभूतं नमो नमस्कारं हविर्वा कृणुत कुरुत। अत्र विपरीतक्रमोऽवगन्तव्योऽन्यत्र[2] संवत्सरोऽसि परिवत्सरोऽस्यग्निर्वाव संवत्सर आदित्यः परिवत्सर इत्यादिक्रमेण पाठात्। [3]उक्तत्रयमिदावत्सरानुवत्सरयोरुपलक्षणम्। चान्द्राः प्रभवादिवत्सराः क्रमेण [4]संवत्सरपरिवत्सरेदावत्सरानुवत्सरेद्वत्सरनाम्ना पुनः पुनरावर्तन्ते। तथा च पूर्वेषां वचनम्[5]

चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे।
[6]संपरीदान्विदित्येतच्छब्दपूर्वास्तु वत्सराः॥ इति।

तेषां यज्ञियानां यज्ञार्हाणामिद्वत्सरादीनां सुमतौ शोभनबुद्धावस्मदनुग्रहयुक्ते चेतसि वयं यष्टारः ज्योक् चिरकालमजीताः—ज्या वयोहानौ—अजीर्णा अहता अहिंसिताः स्याम भवेम ॥१२॥

1 Sāyaṇa reads ज्योगजीता; *T. S.*, *Kāṭhaka. S.*, *P. Gṛ.* have the same reading; *M. Śr.* 1. 6. 4. 21 ज्योग्जीवा; but C & Guṇ ज्योग्जीता.

2 *V.S.*27.45 and *T.Br.*1.4.10.1.

3 D² & G उक्तत्रयमुद्वत्सरा०

4 D² & G संवतसरपरिवत्सरोद्वत्सरा०

5 *Mādhavīya Kārikā* 16 (*Kālanirṇaya* of Mādhavācārya), Bibliotheca Indica, p. 4

6 D² & G संपर्युदन्विदित्येत०

हविरुच्छिष्टशेषं प्राशयेद् यावन्त उपेताः स्युः। सकृदपामुपस्तीर्य द्विश्चरोरवद्यति त्रिर्भृगूणामपाश्चैवोपरिष्टात्। असंस्वादं निगिरेद्भद्रान्नः श्रेय इति [ गो गृ ३. ८. १२-१६ ]।

भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावसेन[1] समशीमहि त्वा।
स नो मयोभूः पितेवा[2] विशस्व शं तोकाय तन्वै[3] स्योनः
स्वाहा ॥१३॥

[तै स ५. ७. २. ११ ; काठ स १३. १५ ; शा गृ ३. ८. ३ ; पा गृ ३. १. ४ ;
गो गृ ३. ८. १६ ; खा गृ ३. ३. १३ द्रः ]

त्रिष्टुबस्य च्छन्दः। व्रीहिहविःप्राशने विनियोगः। व्रीहयो देवताः।

हे व्रीहे त्वा त्वां वयं समशीमहि। अश भोजने। सम्यक् विधिदृष्टेन कर्मणा संस्कृत्य भुञ्जीमहि। केन साधनेन—त्वया। किम्भूतेन त्वया—अवसेन। अवसं पाथेयं शम्बलमुच्यते। 'पद्वदवसं गाव' इत्युपक्रम्य 'अवेर्गत्यर्थस्यासो नामकरण' इति यास्केनोक्तम्[4]। एतदुक्तं भवति—त्वयैव पाथेयभूतेन त्वामेव नवं नवं वर्षशतं यावद्वयमश्नीम इत्यर्थः। एतदेव देवाः प्रार्थ्यन्ते—हे इन्द्रादयो देवाः यूयं नः अस्मान् श्रेयः एतन्नवान्नप्राशनप्रभवमारोग्यं समनैष्ट सम्यक् प्रापयत। छन्दसि लुङ्लङ्लिट इति [ पा ३. ४. ६ ] लुङ्। किम्भूतान् नः—भद्रान् भन्दनीयान् युष्मत्प्रसादेन नवान्नप्राशनार्हान्। किञ्च हे व्रीहे यस्त्वं प्राशितोऽस्माभिः स नः अस्मान् आविशस्व प्रविश। किम्भूतः—मयोभूः मयः सुखं तद्रूपः सन्। पितेव यथा पिता पुत्रं सुखरूपेण प्रविशति परिणमते तथा त्वमपीत्यर्थः। तोकाय अपत्याय च नः शं भूः सुखरूपो भव। तन्वै शरीराय च नः अस्माकं सम्यक् परिणामेन स्योनः भूः सुखकरो भव। तोकाय तन्वै चेति चतुर्थी चाशिष्येति [पा २. ३. ७३] चतुर्थी। स्वाहाकारेण हविरभिधानम् ॥१३॥

1 The reading ०ज्वसेन in *Sāṅkh. Gṛ.* is regarded as a misprint.

2 Sāyaṇa reads पितवाविवेश. पितुरा विवेश, पितो आविशस्व and पितरा- विशस्व are the variants found in different Vedic texts.

3 तनुवे in some texts.

4 *Nir.* 1. 17 has अवतेर्गत्यर्थस्यासो०.

भद्रान्न इत्ययमुक्त एव नवयज्ञे प्रधानाहुतिशेषप्राशने विनियुक्तः। तथा च सूत्रम् [ खा गृ ३. ३. १३ ]—भद्रान्न इत्यसंखाद्य प्रगिरेत्त्रिरिति ॥

पाठस्तु—भद्रान्नः श्रेय इति। छन्दस्त्रिष्टुप्। व्रीह्यादिपाकसाधनभूता[1] वसन्तादयो वनानि वा देवताः।

हे देवाः यूयं नोऽस्माकं भद्रान् कल्याणान् श्रेयः प्रशस्यं धनं च समनैष्ट सम्यक् प्रापयत। लोडर्थे लुङ्। किञ्च हे व्रीह्याद्यन्न अवसेन त्वया। अवसं पाथेयमन्नम्। तथाविधेन[2] त्वया हेतुभूतेन। तव लाभार्थमित्यर्थः। त्वा त्वां समशीमहि—अश भोजने—अश्नाम[3]। अतो हे पितो शरीरस्य पालकान्न स उक्तलक्षणस्त्वं मयोभूः सुखस्य भावयिता सुखकारी सन् नोऽस्मान् अस्मदुदरमाविशस्व प्रविश। किञ्चाविश्य स्योनः सुखकरः शं तोकायापत्याय तन्वै अस्मच्छरीराय भव सुखकारी भव। स्वाहा इदं हविः स्वाहुतमस्तु ॥१३॥

**आचान्तोदकाः प्रत्यभिमृशेरन्मुखं शिरोऽङ्गानीत्यनुलोमम् [ गो गृ ३. ८. २१ ]**

## अमोऽसि प्राण तदृतं [4]ब्रवीम्यमा ह्यसि सर्वमनुप्रविष्टः[4]।
## स मे जरां [5]रोगमपमृज्य शरीरादपाम एधि मा मृथा न इन्द्र[5] ॥१४॥[6]

[ आ श्रौ २. ६. १० ; शा गृ ३. ८. ४। कौशिक ७४. २०। गो गृ ३. ८. २१ ; खा गृ ३. ३. १५ द्रः ]

**त्रिष्टुप् स्वराडस्य च्छन्दः। मुखाद्यङ्गाभिमर्शने विनियोगः। रोगापनोदार्थमिदम्। परमेष्ठिनः प्रजापतेरार्षम्। इन्द्रो ब्रह्म प्रजापतिर्वा देवता।**

1 M¹ & M² ०पाकाधारभूता
2 D² त्वयावसेन ; G तथावसेन
3 D² & G अश्याम
4 *Āśv. Śr.*, *Kauś. Sūtra*—ब्रवीम्यमासि सर्वाङसि ( *Āśv.*—सर्वानसि ) प्रविष्टः. See Sāyaṇa.
5 Variants in *Āśv. Śr.*, *Ṣ. Gr.*, *Kauś.*—रोगमपनुद्य शरीरादमा म एधि मा मृधा म इन्द्र—*Ś. Gr.* न इन्द्र—*Kauś*—शरीरादनामयैधि मा रिषाम इन्दो.
6 Two different traditions are reflected in the variants of the Mantra recorded in the *Āśvalāyanaśrautasūtra* ( 2. 9. 10 ) and the *Śāṅkhāyanagṛhyasūtra* (3. 8. 4) on the one hand, and the *Kauśikasūtra* (74. 20) on the other: अमा म एधि (be close to me ) and अनामयैधि ( be free from disease). The Chāndogya reading अपाम एधि conforms to the Kauśika tradition in spirit.

विज्ञानात्मेह भोक्ता भुक्तान्नमभ्यस्तौदमोऽसीत्ययं समस्तार्थः। अवयवार्थस्तु—हे प्राण प्रजापते अमोऽसि—अम इत्यन्ननाम—अन्नं त्वमसि भवसि। तत् एतत् अहम् ऋतं सत्यं ब्रवीमि व्यक्तं वच्मि। किं तत्—अमा ह्यसि। हि यस्मात् अन्नं त्वम् असि। हे प्राण अमा अन्नमयो भूत्वा सर्वम् अशेषं भूतजातम् अनुप्रविष्टः सर्वगतोऽसि। स मे शरीराद् जरां वपुःपरिणामरूपां रोगं च ज्वरादिवपुःपीडाकरम् अपमृज्य अपनीय अपाम अपगतः अमो रोगो यस्मात् स त्वं तथोक्तः। एधि भव। एतदुक्तं भवति—जरारोगविवर्जितो रसदिग्धान्नरूपेण[1] मम त्वं परिणमेत्यर्थः। अथवा अमेति सप्तमं पदं सहभावे द्रष्टव्यम्[2]। ततश्चायमर्थः—हे प्राण यस्त्वमन्नेन सह सर्वं भूतजातमनुप्रविष्टः स त्वं सर्वगतत्वाच्छरीरे विद्यमानोऽप्यादरार्थं मयोच्यसे त्वं मां जरारोगविवर्जितं कुरु। जरारोगौ हित्वा बलपुष्टिकरः एधि भव। किञ्च हे प्राण इन्द्र। इदि परमैश्वर्ये। ईश्वरस्त्वमसि सर्वभूतानाम्। अतोऽहमेवं ब्रवीमि—नः अस्माकं त्वं मा मृथा मा मरिष्यसि मा विनाशयिष्यसीत्यर्थः। यतस्त्वदायत्तं जन्तूनां जीवनमिति ॥१४॥

अमोऽसीत्ययं शेषभक्षणानन्तरभाविमुख्यप्राणाभिमर्शने विनियुक्तः। तथा च सूत्रम् [ खा गृ ३. ३. १५ ]—अमोऽसीति मुख्यान् प्राणानभिमृशेदिति ॥

पाठस्तु—अमोऽसि प्राण इति। विराट्त्रिष्टुबस्य च्छन्दः। मुख्यप्राणो देवता।

1 A रसादिध्यनुरूपेण; B रसादिद्धनुरूपेण

2 The alternative explanation of the word अमा as सहभाव (to be at home, to be close to) suggests that Guṇaviṣṇu was acquainted with the interpretations of this Mantra coming down to us in separate traditional channels. Guṇaviṣṇu's interpretations of the words अमः and अमा respectively as अन्नम् and सह are in agreement with those of Śaṅkarācārya as found in his *Bhāṣya* on the *Chāndogyopaniṣad*, 5. 2. 6: अमो नामास्यमा हि ते सर्वमिदम्—'अम' इति प्राणस्य नाम। अन्नेन हि प्राणः प्राणिति देह इत्यतो मन्थद्रव्यं प्राणस्यान्नत्वात् प्राणत्वेन स्तूयते 'अमो नामासि' इति। कुतः—यतः 'अमा' सह 'हि' यस्मात् 'ते' तव प्राणभूतस्य 'सर्वम्' समस्तं जगत् 'इदम्' अतः।

हे प्राण। प्रकर्षेणानिति चेष्टत इति प्राणः निश्वासोच्छ्वासरूपो वायुः। तादृश हे देव त्वममोऽसि। अमो रोगः। साक्षाद्रोगरूपो भवसि। [1]देहे वायुसञ्चारभेदेन रोगोत्पत्तेरस्यामत्वम्। यद्वा सर्वदा प्रवेशनिर्गमसम्भवात् कदाचिदप्रवेशे देहपातादमरूपत्वमस्य। यस्मादेव तस्मादृतं ब्रवीमि सत्यमेव [2]वच्मि। सर्वं कृत्स्नममं रोगजातमनुप्रविष्टोऽसि। असीति वक्तव्ये सीत्यकारलोपश्छान्दसः[3]। यद्वा सर्वं शरीरमनुक्रमेण प्रविष्टस्त्वम्। अथवा सर्वं कृत्स्नं चक्षुरादीन्द्रियजातमनु पश्चाच्छरीरे प्रविष्टस्त्वम्। अमं ह सीति[3] योज्यम्। प्राणस्य सर्वेन्दियानुप्रवेश ऐतरेयोपनिषद्याम्नातः[4]—वाक् प्राविशदशयदेवेत्युपक्रम्य प्राणः प्राविशत्तत् प्राणे प्रपन्न उदतिष्ठदिति[5]। किञ्च स त्वं मे मम शरीरसकाशाज्जरां वयोहानिप्रयुक्तां शरीरपरिणामलक्षणाम्। रोगं शरीरपीडाकरं ज्वरादिकं च। अथवा जरालक्षणं रोगम्। अपमृज्यापमार्जयित्वा विनाशय। हे इन्द्र चक्षुरादीन्द्रियस्वामिन्मुख्यतरप्राण[6] त्वं नोऽस्माकमपाम एध्यपगतरोगो भव। किञ्च मा मृथा मरणं मा प्राप्नुहि। देहान्मा विनिर्गच्छेत्यर्थः ॥१४॥

**एतयैवाऽवृता श्यामाकयवानाम् [ गो गृ ३. ८. १९ [**

**अग्निः प्राश्नातु प्रथमः स हि वेद यथा हविः।**
**शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः स्वाहा ॥१५॥**

[ काठ स १३. १५ ; आप म २. १०. ७। गो गृ ३. ८. २३ ; खा गृ ३. ३. ८ द्र: ]

**अनुष्टुबस्य च्छन्दः श्यामाकप्राशने विनियोगः। जाठरोऽग्निर्देवता।**

**एतच्छ्यामाकलक्षणं हविर्जाठरः अग्निः प्राश्नातु प्रकर्षेण भुङ्क्ताम्। प्रथमः अग्र्यः सः अग्निः हि यस्मात् वेद जानाति। यथा हविः यत् यादृशं हविः। किञ्च शिवाः सुखकरीः अस्मभ्यम् अस्मदर्थम् ओषधीः ग्राम्या आरण्याश्च कृणोतु करोतु। किम्भूतः—विश्वचर्षणिः सर्वस्य जगतो द्रष्टा। स्वाहेत्युक्तार्थम् ॥१५॥**

अग्निः प्राश्नात्वित्ययं शेषभक्षणात् पूर्वभावी शतायुधायेत्यादिभिश्चतसृभिर्य आज्यहोम उक्तस्तदनन्तरभाविन्याज्यहोमे विनियुक्तः। तथा च सूत्रम् [ खा गृ ३. ३. ७, ८ ]— शतायुधायेति चतसृभिराज्यं जुहुयात्। उपरिष्टादग्निः प्राश्नात्विति चेति ॥

1 D² & G omit देहे.
2 D² & G वदामि
3 Sāyaṇa reads अमं ह सि for अमा ह्यसि. Hence the remarks.
4 The citation occurs in *Ait. Āraṇyaka* 2. 1. 4.
5 D² omits the cited passage.
6 M¹ & M² ॰न्मुख्यप्राण

पाठस्तु—अग्निः प्राश्नात्विति। अनुष्टुबस्य च्छन्दः। अग्निर्देवता।

अग्निर्देवानां प्रथम इतरसोमादिदेवेभ्यः पूर्वः प्राश्नातु 'व्रीहियवादिरूपं[1] हविर्भक्षयतु। स हि स खल्वग्निर्हविरुक्तलक्षणं द्रव्यं यथा यथावृत्तं वेद जानाति। यत एवमतः प्रथमः प्राश्नात्वित्यर्थः। हिशब्दः प्राथम्यप्रसिद्ध्यर्थः। इतरदेवानुद्दिश्याग्नावेव हि हूयते। तथा कृत्वा विश्वचर्षणिः। विश्वे चर्षणयो मनुष्या ऋत्विग्यजमाना यस्य स तथोक्तः। सोऽस्मभ्यमोषधीः व्रीहियवादिकाः शिवाः सुखकरीः कृणोतु करोतु ॥१५॥

**एतमु त्यं मधुना संयुतं यवं [2]सरस्वत्या अधिवनाव चकृधि[2]। इन्द्र आसीत् सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानवः स्वाहा ॥१६॥**

[ गो गृ ३. ८. २४; पा गृ ३. १, ६ द्र: ]

जगत्यस्य च्छन्दः। यवचरुप्राशने विनियोगः। इन्द्रो देवता।

हे इन्द्र सीरपते एतम्। उ पादपूरणे। त्यं यवम्। जातावेकवचनम्। मधुना स्वादुरसेन संयुतं सम्यङ्मिश्रितं सरस्वत्या नद्या अधिवना उपरिवनेषु दावेषु अवचकृधि अत्यर्थं पुनः पुनर्वाऽवकृष्य कुर्वित्यर्थः। किमित्याशङ्क्याह—यत इन्द्रो देवराजः सीरपतिः कर्षणस्य कारयिता आसीत् अभूत्। मरुतश्च देवविशेषाः कीनाशाः कर्षका आसन् बभूवुः। किम्भूताः—सुदानवः शोभनस्य भोगस्य दातारः। तदनेन यवोत्पत्तेः प्रशंसोच्यते। स्वाहेत्युक्तार्थम् ॥१६॥

इति भट्ट-गुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये द्वितीयप्रपाठके प्रथमः खण्डः ॥

1 D² व्रीह्यादिरूपं

2 Variants in other texts: *Kaṭhaka* 13. 15 सरस्वत्या अधि माना अचकृषुः; *Av.* 6. 30. 1 सरस्वत्यामधि मणावचकृषुः; *P. Gr.* 3. 1. 6 सरस्वत्या अधि वनाय चकृषुः; *T. Br.* 2. 4. 8. 7; *Āp. Śr.* 6. 30. 20; *M. Śr.* 1. 6. 4. 24 सरस्वत्या अधि मनावचकृषुः. Sāyaṇa explains the readings mentioned last, substituting ०वचकृषुः for ०वनचकृषुः.

एतमु त्यमिति यवानां प्राशनमन्त्रः। अस्य जगती च्छन्दः। मरुद्भिशिष्ट इन्द्रो देवता।

एतं पुरतो [1]भक्ष्यमाणं त्यम् [2]अत्यन्तप्रसिद्धं यवं हविःशेषरूपं मधुना मधुरसेन संयुतं संयुक्तम्। भक्षयामीति शेषः। [3]सरस्वत्या नद्याः। तीर इति शेषः। अधि मनौ। अधीति सप्तम्यर्थानुवादी [ पा १. ४. ६६ द्रः ]। मनौ [4]मनननिमित्तभूते मनोरथे। यद्वा सरस्वत्या अधि उपरिप्रान्त इत्यर्थः। अवचक्रुर्यवावाप्त्यर्थं भूविलेखनमवाद्म्यु खं[5] कृतवन्तः। के किम-कुर्वतेत्युच्यते। पूर्वं कर्षणसमये शतक्रतुर्बहुप्रज्ञो बहुकर्मा वेन्द्रो देवः सीरपतिः कर्षकस्वाम्या-सीत्। तथा सुदानवः शोभनदाना मरुत इन्द्रानुचराः कीनाशाः कर्षका आसन्। स्वाहा स्वस्मिन् हुतमस्तु ॥१६॥

॥*॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणमन्त्रपर्वणि द्वितीयप्रपाठके प्रथमः खण्डः ॥*॥

---

1 D[2] वक्ष्यमाणं
2 D[2] तं प्रसिद्धं
3 G adds या before it.
4 M[1] & M[2] मनावितिनिमित्तभूते
5 Sāyaṇa's readings and expositions differ from those of Guṇ.

## अथ द्वितीयप्रपाठके द्वितीयः खण्डः

प्रदोषे पायसश्चरुः। तस्य जुहुयात् [गो गृ ३. ९. ८, ९]

प्रथमा [1]हव्युवास सा[1] धेनुरभवद्यमे ।
सा नः पयस्वती दुहा[2] उत्तरामुत्तरां समाम् ॥१॥

[ ऋ स ४. ५७. ७ ; अ स ३. १०. १ ; मै स २. १३. १० ;
काठ स ३६. १० । गो गृ ३. ६. ६ ; खा गृ ३. ३. १८ द्र: ]

अनुष्टुबस्य च्छन्दः। आग्रहायणीकर्मणि चरुहोमे विनियोगः। आग्रहायणी देवता। सैव धेनुरूपेण स्तूयते।

या सा धेनुः प्रथमा अग्रगा आग्रहायणी यमे धर्मराजे अभवत् भूतवती हवि हविषि च पयोलक्षणे उवास उषितवती कारणत्वेन प्रविष्टेत्यर्थः।

1 D[2] puts the words *ha vyuvāsa sā* separated as found in the texts of the *Atharva*, *Kāṭhaka* and *Maitrāyaṇī Saṃhitās*. The commentary in D[2] however explains different readings: हव्यवाहसा हव्यं चरुलक्षणम् स्वतेजसा वाहयित्री. The explanation given here by Sāyaṇa is not in conformity with his own *Atharvavedabhāṣya* ( 3. 10, 12 ) which makes a better sense: प्रथमा ह सृष्ट्यादावुत्पन्ना खल्वेषा एकाष्टकासम्बन्धिनी आद्योषा व्युवास तमोव्युदसनं कृतवती। विपूर्वो वसिर्वर्जने वर्तते। Cf. *infra*, 2. 2. 12 एषैव सा या पूर्वा व्यौच्छत्. Cf. also the *Taittirīya* (4. 3. 11. 1) text—इयमेव सा या प्रथमा व्यौच्छत् on which Sāyaṇa comments मुख्यासु पञ्चसूषःसु या प्रथमोषा व्यौच्छत् तमो व्यवासयत् प्रकाशोत्पादनेन तमो निराकरोदित्यर्थः। But Guṇaviṣṇu differs. That his reading हव्युवास सा was well known is however confirmed by Sāyaṇa in the following remark: केचन हव्युवास सेति पाठं कृत्वा प्रथमा यमे हविरुवासेति व्याचक्षते.

2 *Ṛgveda* (4. 57. 5), *Atharva* (3. 10. 1) and *Kāṭhaka* (39. 10) read दुहाम्. Sāyaṇa adopts the same. Guṇaviṣṇu is however aware of the variant, as he says here शाखान्तरे दुहामेव पाठः. See also *infra* 2. 2. 4.

**हविःशब्दस्य सुपां सलुगिति [पा ७. १. ३९] सप्तम्या लुक्। छान्दसः सकारलोपश्च। सा नः पयस्वती इष्टफलदायिनी सती उत्तरामुत्तरां समाम् उत्तरोत्तरं वर्षं दुहा दुग्धाम्। दुहेति लोपस्त आत्मनेपदेष्विति [पा ७. १. ४१] तलोपः। मकारलोपश्छान्दसः। शाखान्तरे दुहामेव पाठः[1]। पुत्रपश्वन्नग्रामलक्षणान् कामान् पूरयत्वित्यर्थः ॥१॥**

अथाग्रहायणमन्त्राः ॥

प्रथमा हव्यवाहसेत्ययम् 'आग्रहायण' कर्म श्रावणेनैव व्याख्यातम्' [खा गृ ३. ३. १६] इत्युक्त आग्रहायणे कर्मणि पायसहोमे विनियुक्तः। तथा च सूत्रम् [खा गृ ३. ३. १८]—प्रदोषे पायसस्य जुहुयात् प्रथमेतीति ॥

पाठस्तु—प्रथमा हव्यवाहसेति। अनुष्टुबस्य च्छन्दः। आग्रहायण्यभिमानिन्युषा देवता।

प्रथमा मुख्या। प्रथम इति मुख्यनाम प्रतमो भवतीति निरुक्तम् [२. २२]। हव्यवाहसा। हव्यं चरुलक्षणं स्वतेजसा वाहयित्री[2]। यमे नियमयितर्यादित्येऽग्नौ वा। धेनुर्धेनुसदृशी प्रीणयित्र्यभवत्। सा देवी नोऽस्माकं पयस्वती पयोलक्षणबह्वन्नोपेता सत्युत्तरामुत्तरां समामुपर्युपरि वर्तमानं संवत्सरं सर्वेषु संवत्सरेषु दुहां दुग्धाम्। व्रीह्यादिकं प्रयच्छत्वित्यर्थः। लोपस्त आत्मनेपदेषु (पा ७. १. ४१) इति तलोपः।[3] केचन[4] हव्युवासेति पाठं कृत्वा प्रथमा यमे हविरुवासेति व्याचक्षते ॥१॥

**पश्चादग्नेर्बर्हिषि न्यञ्चौ पाणी प्रतिष्ठाप्यैता व्याहृतीर्जपति[5] [गो गृ ३. ९. ११]**

## प्रति क्षत्रे प्रति तिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रति तिष्ठामि गोषु।
## प्रति प्राणे प्रति तिष्ठामि पुष्टौ प्रत्यङ्गेषु प्रति तिष्ठाम्यात्मनि ॥२॥
## प्रति द्यावापृथिव्योः प्रति तिष्ठामि यज्ञे ॥३॥

[वा स २०. १० ; काठ स ३८. ४ ; आप म २. १८. ३ द्रः ; हि गृ २. १७. ४ ; गो गृ ३. ६. ११ ; खा गृ ३. ३. १६ द्रः]

1 See the previous foot-note.
2 B[1] & G वासयित्री
3 M[1] & M[2] add मलोपश्छान्दसः, though they explain दुहां दुग्धाम्.
4 Guṇaviṣṇu's interpretation seems to have been referred to here by Sāyaṇa.
5 Vyāhṛtis here mean utterances.

**प्रति क्षत्र इति त्रिष्टुबस्य छन्दः। प्रति द्यावापृथिव्योरित्यादि यजुः। जपे विनियोगः। अग्निर्देवता। यजमान इदं प्रार्थयते।**

**हे अग्ने प्रतिक्षत्रे क्षत्रं क्षत्रं प्रतितिष्ठामि। लिङर्थे लेट् [पा ३. ४. ७]। राष्ट्रे राज्ये प्रतिष्ठितोऽहं भवेयम्। प्रतिष्ठा तपोब्रह्मवर्चसादिभिर्गुणैर्मम भवत्वित्यर्थः। तथा राष्ट्रे देशे प्रत्यश्वेषु प्रति समन्ताद्वाजिषु तथा गोषु तथा प्रतिप्राणे दीर्घायुषि तथा पुष्टौ बले तथा प्रत्यङ्गेषु पाणिपादादिषु दृढत्वेन। तथा आत्मनि क्षेत्रज्ञे स्वरूपपरिज्ञानेन ॥२॥**

**तथा प्रति द्यावापृथिव्योः सर्वभूतानां धारणावकाशदातृत्वेन। तथा यज्ञे अग्निष्टोमादौ। कर्मरूपे फलरूपे च प्रतितिष्ठामीत्युक्तार्थम् ॥३॥**

होमानन्तरं प्रति क्षत्र इति जपेत्। तथा च सूत्रम् [ खा गृ ३. ३. १६ ]—न्यञ्चौ पाणी कृत्वा प्रति क्षत्र इति जपेदिति ॥

प्रति क्षत्र इति। त्रिष्टुबस्य छन्दः। अग्निलिङ्गाभावेऽपि तत्सन्निधौ प्रार्थ्यमानत्वादग्निर्देवता।

हे अग्ने त्वदनुग्रहादहं[1] क्षत्रे—क्षतात् त्रायत इति क्षत्रं बलम् तस्मिन्। प्रतितिष्ठामीति सम्बन्धः। एवमुत्तरेष्वपि प्रतिशब्देषु योज्यम्। तथा राष्ट्रे राज्ये प्रतितिष्ठामि प्रतिष्ठितो भवामि। तथाश्वेषु गोषु च प्रतितिष्ठामि। अस्माकं गावोऽश्वाश्चाविचलिता भवन्त्वित्यर्थः। किञ्च प्राणे मदीये प्राणवायौ प्रतितिष्ठामि। प्राणोऽपि मां मा मुञ्चत्वित्यर्थः। तथा पुष्टौ शरीरपोषे प्रतितिष्ठामि। एवमङ्गेषु चक्षुराद्यवयवेषु प्रतितिष्ठामि। मदीयान्यङ्गानि प्रतिष्ठितानि सन्त्वित्यर्थः। एवमात्मन्यपि। जीवात्माहं परमात्मनि प्रतितिष्ठामि स्वरूपनिष्ठो भवामीत्यर्थः। अथवा आत्मा बुद्धिः स्थिरबुद्धिर्भवामीत्यर्थः ॥२॥

प्रति द्यावापृथिव्योरिति। उक्ते विनियोगदेवते। यजुर्मन्त्रोऽयमतो न च्छन्दः।

हे अग्ने द्यावापृथिव्योर्मध्ये प्रतितिष्ठामि। दिवि पृथिव्यां च ये [2]भोगाः सन्ति ते मयि स्थिरा भवन्त्वित्यर्थ। एवं यज्ञेऽग्निष्टोमादौ प्रतितिष्ठामि स्थिरो भवामीत्यर्थः ॥३॥

**गृहपतिः स्वस्तरे न्यञ्चौ पाणी प्रतिष्ठाप्यैतामृचं जपति [गो गृ. ३. ९. १६]**

1 B[1], D[2] & G omit अहं. 2 D[2] & G भेदाः; M[1] भागाः

**स्योना पृथिवि नो भवानृक्षरा निवेशनी ।**
**यच्छा नः शर्म सप्रथो[1] दैवान्[2] मा भयादिति ॥४॥**

[ ऋ स १. २२. १५ ; काठ स ३८. १३ ; शा गृ १. २७. ६ ; आप म २. १५. २— पृथिवि भवानृत्तरा । वा स ३५. २१ ; पा गृ ३. २. १३ । गो गृ ३. ६. १६ ; खा गृ ३. ३. २३ द्र: ]

**अनुष्टुबस्य च्छन्दः । जपे विनियोगः । पृथिवी देवता । पृथिव्यनेन प्रार्थ्यते ।**

**हे पृथिवि स्थानगमनशयनादिकाः क्रियाः कुर्वतां नः अस्माकं स्योना सुखस्य कर्त्री भव । स्योनशब्दः सुखनामगणे पठ्यते[3] । अनृक्षरा ऋक्षराः कण्टका न विद्यन्ते यस्यां त्वयि सा त्वम् अनृक्षरा कण्टकादिदोषवर्जितेत्यर्थः । निविश्यन्ते स्थानादिकाः क्रियाः क्रियन्ते प्राणिभिर्यया यस्यां वा सा त्वं सर्वप्राणिनां निवेशनी । किञ्च हे पृथिवि नः अस्मभ्यं शर्म सुखं शरणमाश्रयो वा यच्छ देहि । क्षरयजयच्छेत्यादीनां शौनकवचनाद्दीर्घत्वम्[4] । किम्भूतम्—सप्रथः सर्वतः पृथु विस्तीर्णं दैवात् देवोत्थादरिष्टात् जरामरणरोगभयाच्च मा मां पाहीत्यध्याहार्यम् । इतीति प्रारब्धकर्मसमाप्त्यर्थम् ॥४॥**

स्योनेत्ययं तत्रैव कर्मणि गृहपतिजपे विनियुक्तः । तथा च सूत्रम् [ खा गृ ३. ३. २३ ]— न्यञ्चौ पाणी कृत्वा स्योनेति गृहपतिर्जपेदिति ॥

स्योना पृथिवीति । अनुष्टुबस्य च्छन्दः । पृथिवी देवता ।

हे पृथिवि नोऽस्माकं स्योना सुखा भव । किञ्चानृत्तरा । ऋत्तरः कण्टकः तद्रहिता । निवेशनी सर्वेषां निवेशयित्री । किञ्च नोऽस्माकं शर्म शरणं सुखं यच्छ प्रयच्छ । सप्रथः सर्वथा[5] प्रथितस्त्वम् । किंच [6]दैवाद्भयाद् देवेष्वकरणान्यथाकरणादिजनिताद्भयादित्यर्थः । तस्मान्मा मां रक्षेति शेषः । इतिशब्दो मन्त्रसमाप्तिद्योतनार्थः ॥४॥

1 Several Vedic texts and Sāyaṇa in D² read सप्रथाः. But *Ṛv.* 10. 122. 15, mss. of Sāyaṇa and *Nir.* 9. 32 have सप्रथः.

2 D² *devān mā*. But *Śāṅkh. Śr.* 2. 14. 4 ; 2. 15. 2 दैवान्मा भयात् पाहि.

3 *Nigh.* III 6. 15

4 See *Ṛgveda-prātiśākhya* VII. 33—त्तरयजयच्छदशस्यसाधसेध etc. Cf. *Pāṇini* 6. 3. 135—द्व्यचोऽतस्तिङः.

5 D² & G सर्वतः

6 D² & G देवोद्भवात्

**तैष्या ऊर्ध्वमष्टम्यां गौः। तां सन्धिवेलासमीपं पुरस्तादग्नेरवस्थाप्योपस्थितायां जुहुयात् [गो गृ ३. १०. १८, १९]**

**यत् पशवः प्रध्यायत मनसा हृदयेन च।**
**वाचा सहस्रपाशया मयि बध्नामि वो मनः ॥५॥**

[ गो गृ ३. १०. १६ ; खा गृ ३. ४. २ द्रः ]

**अनुष्टुबस्य च्छन्दः। होमे विनियोगः। पशवो देवताः।**

**हे पशवः यूयमालभ्यमाना यत् येन मनसा अन्तःकरणेन हृदयेन तदाधारणेन वाचा सहस्रपाशया बहुबन्धनया यजमानं प्रति विरूपकं प्रध्यायत चिन्तयत तद् वो युष्माकं क्रोधान्धं मनः मयि आत्मनि बध्नामि स्ववशं करोमीति यावत् ॥५॥**

अथाष्टका मन्त्रा उच्यन्ते। आग्रहायण्या ऊर्ध्वं तिस्रोऽष्टकाः कर्तव्याः। तत्र मध्यमायामपरपक्षाष्टम्यां गौः स्थालीपाकेन सह समुच्चयत्वेनोपालभ्या[1]। तत्र गामग्नेः सन्निधाववस्थाप्य यत् पशव इत्यनेन जुहुयात्। तथा च सूत्रान्तरम् [ खा गृ ३. ४. २ ]—पुरस्तादग्नेः प्रत्यङ्मुखीमवस्थाप्य जुहुयाद् यत् पशव इतीति ॥

यत् पशवः प्रध्यायतेति। अनुष्टुप् छन्दः। पशवो देवताः।

पशवो हन्यमाना गोहयभूता[2] यन्मरणरूपं प्रध्यायत प्रकर्षेण चिन्तयत। केनेति—मनसा यजमानो हनिष्यति वा न वेति संशयात्मकेन मानसेन। तथा हृदयेन कृपायुक्तया बुद्ध्या। अथ प्रत्यक्षेणोच्यते। हे पशवो वो युष्माकमुक्तचिन्तास्पदं मनो वाचा मन्त्ररूपया। कीदृश्या—सहस्रपाशया अपरिमितबन्धनया प्रतिबध्नामि प्रतिबद्धं करोमि। मन्त्रेण मनः [3]प्रसादयामीत्यर्थः ॥५॥

**हुत्वा चानुमन्त्रयेत [गो गृ ३. १०. २०]**

1 B[1] ०नोपलभ्य ; D[2] ०नोपालम्भ्या ; G ०नोपलभ्यः ; M[1] & M[2] ०त्वेन पाठः ; See Rudraskanda on *Kh. Gr.* 1. 3. 4.
2 D[2] & G हन्यमानगोसहायभूता
3 M[1] & M[2] प्रसाधया०

अनु त्वा माता मन्यतामनु पिताऽनु भ्राताऽनु[1]
सगर्भ्योऽनु सखा सयूथ्यः ॥६॥

[ वा स ४. २० ; तै स १. २. ४ २—ऽनु भ्राता सगर्भ्यो।
गो गृ ३. १०. २० ; खा गृ ३. ४. ३ द्रः ]

यजुरिदमनुमन्त्रणे विनियुक्तं पशुदेवताकम्।

हे पशो अस्मिन्नतिश्रेयसि दैव्ये पित्र्ये वा कर्मणि विनियुक्तं त्वा त्वां माता अनुमन्यतां तथा पिता तथा भ्राता तथा सगर्भ्यः सहोदरः। सगर्भ्य इति वचनाद् भ्राताऽन्यमातृकोऽवगन्तव्यः। तथा सखा मित्रं तथा सयूथ्यः समानवंश्यः। सगर्भ-सयूथशब्दाभ्यां यतोऽधिकारे सगर्भसयूथसनुताद्यन्निति [पा ४. ४. ११४] यन्प्रत्ययः। अनुमन्यतामनुश्लाघ्यताम्। छन्दसि व्यवहिताश्चेति [पा १. ४. ८२] वचनादनुरुपसर्गः सर्वत्र मन्यतामित्यनेन सह सम्बध्यते ॥६॥

अपः पानाय दद्यात्। पीतशेषमधस्तात् पशोरवसिञ्चेत् [गो गृ ३. १०. २३, २४]

आत्तं देवेभ्यो हविः ॥७॥

[ गो गृ ३. १०. २४ ; खा गृ ३. ४. ३ द्रः ]

यजुरिदमपामवसेचने विनियुक्तं पशुदेवताकम्।

हे पशो आत्तं गृहीतं त्वया देवेभ्यो देवार्थं हविर्भक्ष्यमिति ॥७॥

उक्तहोमानन्तरं व्याहृतिभिर्हुत्वाऽनु त्वेति पशुमनुमन्त्रयेत। तथा च सूत्रम्—[ खा गृ ३. ४. ३ ]—हुत्वा चानुमन्त्रयेतानु त्वेतीति ॥

अनु त्वा मातेति। यजुर्मन्त्रोऽयं पशुदेवताकः।

हे आलभ्यमान पशो त्वा यज्ञ [2]उपयुज्यमानं त्वां माता तव जनयित्र्यनुमन्यतामनुमतिं कुरुताम्। एवं पित्रादयोऽप्यनुमन्यन्ताम्। सगर्भ्यः समान एकस्मिन्नेव गर्भे उत्पन्नः

1 *Kāśikā* on *P.* 4. 4. 114 cites अनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः— as read in the *Vājasaneya* and *Taittirīya Saṃhitās*. But our mss. including C have an additional अनु after भ्राता. Guṇaviṣṇu supports these readings and takes भ्राता and सगर्भ्य as belonging to two different categories, सगर्भ्य being explained as full brother.

2 M[1] & M[2] उपलक्ष्यमानं

सगर्भ्यः सोदर इत्यर्थः। सयूथ्यः समानयूथार्हः समानवयस्क इत्यर्थः। यतस्त्वदीयमङ्गं देवेभ्यो देवार्थम् आत्तं स्वीकृतं मया। केवलभक्षणार्थहिंसाभावाद्देवतार्थमुपयुक्तत्वात्[1]। ततः सर्वेऽप्यनुमतिं कुर्वन्त्वित्यभिप्रायः ॥६, ७॥

**संज्ञप्तायां जुहुयात् [गो गृ ३. १०. २८ ]**

यत् पशुर्मायुमकृतोरो वा पद्भिराहत[2]।
अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥८॥

[ तै स ३. १. ४. ६। गो गृ ३. १०. २८ ; खा गृ ३. ४. ७ द्रः ]

**अनुष्टुबस्य च्छन्दः। होमे विनियोगः। अग्निर्देवता।**

**पशुः संज्ञप्यमानो मायमाणः। मायुं शब्दम्। मायुशब्दो वाङ्नामधेयगणे[3] पठ्यते। अकृत कृतवान्। उरो वा हृदयं च पद्भिः पादाभ्याम् आहत आहतवान्। एवं यदंहः तस्मात् विश्वात् सर्वस्मात् अंहसः पापात्। किम्भूतात्—एनसः एष्यति आगमिष्यतीत्येनः एष्यत् पापं तस्मात्। अग्निर्भगवान् मा मां यजमानं मुञ्चतु मोचयतु वियोजयत्वित्यर्थः ॥८॥**

पशुमुदङ्ङुत्सृप्य प्रत्यक्शिरसमुदक्पादं संज्ञपयेत् शमिता[4]। अनन्तरं यत् पशुरित्यनेनाज्याहुतिं जुहुयात्। तथा च सूत्रम् [ खा गृ ३. ४. ७ ]—संज्ञप्तायां जुहुयाद्यत् पशुरितीति ॥

पाठस्तु—यत् पशुर्मायुमिति। अनुष्टुप् छन्दः। अग्निर्देवता।

हन्यमानः [5]पशुर्व्यथासहिष्णुः सन् यत् मायुं शब्दमकृत कृतवान्। अथवोरो हृदयप्रदेशं पद्भिः पादैराहते हिनस्ति संताडयति। हन्तेराङ्पूर्वस्यात्मनेपदे लटि रूपम्। तस्मान्मायुकरणपादहननरूपादेनसः पापादग्निर्देवो मा मां मुञ्चतु मोचयतु। न केवलमुक्तरूपादेव पापादपि तु विश्वादंहसः सर्वस्मात् संज्ञपननिमित्तात् पापान्मुञ्चतु ॥८॥

**चतुर्गृहीतमाज्यं गृहीत्वाऽष्टर्चप्रथमया जुहुयात् [गो गृ ४. १. १३]**

1 M¹ & M² देवतोपयुक्तत्वात्
2 Sāyaṇa reads आहते.
3 *Nigh*. I. 2. 27
4 See *Kh. Gr*. 3. 4. 6.
5 D² and G पशुर्व्यथसहिष्णुः

अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो [1]अधिराज एषः[1] ।
स नः स्योनः सुयजा[2]यजा च[2] यथा देवानां जनिमानि वेद ॥९॥

[ काठ स ३. ४—अग्ना अग्नि० । अ स ४. ३९. ९ ; वा स ५. ४ ; श ब्रा ३. ४. १. २५ ।
तै स १. ३. ७. २ द्रः । गो गृ ४. १. १३ ; खा गृ ३. ४. २३ द्रः ]

**स्वराट् पङ्क्तिरियं विराट् त्रिष्टुब् वा होमे विनियुक्ताऽग्निदेवताका ।**

**पश्वालम्भनकर्मणि पुनर्मथित्वा योऽग्निराहवनीयाग्नौ विधीयते स एव-मुच्यते । एषः पुनर्मथितोऽग्निराहवनीये अग्नौ प्रविष्टः अन्तर्भूतश्चरति भक्षयत्यन्न-माहुतम् । किम्भूतः—ऋषीणां ब्राह्मणानां मथितॄणां पुत्रः उत्पन्नः । ते हि तमरणौ मथित्वा जनयन्ति हविषा च पुत्रमिव वर्धयन्तीति कृत्वोत्पादकाः । अधिराजः सर्वेषामीश्वराणामधि उपरि ऐश्वर्येण वर्तत इत्यर्थः । स एवंभूतो नः अस्माकं स्योनः सुखस्य कर्ता । तेन प्रकारेण सुयजा शोभनेन यागेन तमहं यजा यजामि यथा येन प्रकारेण देवानामिन्द्रादीनां जनिमानि जन्मानि अहं वेद तत्प्रसादाज्जानामि । अनेनात्मनो दीर्घायुष्ट्वमाशंसितं भवति ॥६॥**

अग्नावग्निरित्ययमवत्तानामङ्गानां होमे विनियुक्तः । तथा च सूत्रम् [ खा गृ ३. ४. २३ ] —चतुर्गृहीतमष्टगृहीतं वात्र जुहुयादग्नाविततीति ॥ द्वाविंशतिः पश्ववदानानि तेषां चत्वार्यष्टौ वा चर्ववदानमिश्राणि गृहीत्वा जुह्वा जुहुयादित्यर्थः[3] ।

अग्नावग्निश्चरतीति । [4]विराट् पङ्क्तिश्छन्दः । अग्निर्देवता ।

अग्नावाहवनीये योऽयमग्निः पुनर्मथनसम्पादितः प्रविष्टो मिश्रितः सन् चरतीतस्ततो ज्वालया व्याप्नोति हविर्भक्षयति वा । कीदृशोऽयम्—ऋषीणां मन्त्राणां पुत्रः पुत्रस्थानीयो मन्त्रेण मथनादुत्पन्नत्वात् । यद्वा ऋषिभिर्ऋत्विग्भिरुत्पादितत्वात् तत्पुत्रत्वमुपचर्यते । तथाधिराजः सर्वस्य स्वाम्यधिकं राजमानो वा यस्मान्नास्ति[5] । सोऽग्निर्नोऽस्माकमर्थाय स्योनः सुखकारी सन् यजाति यष्टव्यान् देवान् यजतु पूजयतु । हविः प्रापयत्वित्यर्थः । कीदृशः—

1 *Vāj. Mādhy. S.* 5. 4 ; *Ś. Br.* 3. 4. 1. 25—अभिशस्तिपावा ; *Av.* 4. 39. 9—अभिशस्तिपा उ ; *T. Br.* 2. 7. 15. 1—अभिशस्तिपा अयम्.

2 *Vāj. Mādhy. S.* and *Ś. Br.*—यजेह ; Sāyaṇa यजाति.

3 See Rudra on *Kh. Gṛ.* 3.4.23.

4 M[1] & M[2] स्वराट्पङ्क्तिः०

5 B[1], D[3] & G omit it.

सुयजाः [1]शोभनं देवान् यजतीति वा[1] सुष्ठु यजनीयो वा। यागप्रकार उच्यते। यथा येन प्रकारेण देवानां यजनीयानां जनिमानि जन्मानि वेद जानाति तेन प्रकारेण यजतु ॥९॥

**कंसपात्रे सन्नीताद्धविषस्तृतीयमात्रमवदाय द्वितीयातृतीयाभ्यां जुहोति [गो गृ ४. १. १४ द्रः]**

ओलूखलाः सं प्रवदन्ति ग्रावाणो हविष्कृण्वन्तः परिवत्सरीणाम्।
एकाष्टके सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं ते ॥१०॥

[ आप म २. २०. ३४ द्रः। गो गृ ४. १. १४ ; खा गृ ३. ४. २४ द्रः ]

**त्रिष्टुबस्य च्छन्दः। होमे विनियोगः। अष्टका देवता। एवमुत्तरमन्त्रत्रयस्यापि।**

**औलूखलाः उलूखलरूपेण परिणताः ग्रावाणः पाषाणाः सं समेत्यैकीभूताः प्र प्रकर्षेण वदन्ति। तथा मन्त्रान्तरेऽपि[2] ग्राव्णां वदनं दृश्यते—'एते वदन्ति शतवत् सहस्रवदभि क्रन्दन्ति हरितेभिरासभि'रित्यादि। किं कुर्वन्तः—हविर्हव्यं चरुपुरोडाशादिकं कृण्वन्तो निष्पादयन्तः। कासां सम्बन्धि—अष्टकानाम्। किम्भूतानाम्—परिवत्सरीणाम् परिगतः अतिक्रान्तः वत्सरः संवत्सरो यासां तास्तथोक्तास्तासाम्। तैष्या ऊर्ध्वमष्टका एकाष्टका। तस्याः सम्बोधनम्—हे एकाष्टके। यस्याः ते तव अचेतना अपि ग्रावाणो हविः कुर्वन्ति तस्या बलिहृतः त्वां प्रतिवर्षं यजमाना वयं ज्योक् चिरं जीवेम प्राणान् धारयेम। किम्भूताः—सुप्रजसः शोभनया प्रजया प्रजावन्तः शोभनैः पुत्रैः सुवीराः। तदनेनाष्टकानां नित्यत्वमुक्तम्। तथा चोक्तम् [गो गृ ४. १. २२] – न त्वेव न कुर्वीत न त्वेव न कुर्वीतेति ॥१०॥**

औलूखला इत्यादयोऽपि षण्मन्त्राः पश्वङ्गहोम एव विनियुक्ताः। तथा च सूत्रम् [ खा गृ ३. ४. २४ ]—कंसात् पराभिर्द्वाभ्यां द्वाभ्यामेकैकामाहुतिमिति ॥ कंसादेव गृहीत्वा पराभिरृग्भिरौलूखला इत्यादिभिः षड्भिर्द्वाभ्यां द्वाभ्यां पश्ववदानाभ्यां चर्ववदानमिश्राभ्यां जुह्वा जुहुयादित्यर्थः।

तत्र प्रथमः—औलूखला इति। त्रिष्टुप् छन्दः। अष्टका[3] देवता।

1 B[1] शोभनहोममयः ; M[2] शोभनं देवानामायसा
2 *Ṛv*. 10. 94. 2
3 B[1] एकाष्टका

औलूखलाः। [1]एतन्मुसलानामप्युपलक्षणम्। अवहननसाधनोलूखलमुसलोत्पन्ना अवघाताः[1] संप्रवदन्ति सम्भूय[2] प्रकर्षेण शब्दयन्ति। अवहननशब्दा उत्पद्यन्त इत्यर्थः[3]। तथा ग्रावाणः पेषणसाधनाश्च[4] संप्रवदन्ति। यद्वा औलूखला उलूखलसंबन्धिनस्तद्रूपेण निष्पादिता ग्रावाणः संप्रवदन्ति। कीदृशस्ते—परिवत्सरीणाम्। परीत्ययं समित्यस्यार्थे। संवत्सरे यष्टव्यैकाष्टका देवता परिवत्सरीणा। तामुद्दिश्य हविश्चरुपुरोडाशादिकं कृण्वन्तः कुर्वन्तः। यत एवमतो हे एकाष्टके ते तुभ्यं बलिहृतः पूजाकर्तारो वयं सुप्रजसः शोभनपुत्रादिरूपप्रजोपेताः[5] सुवीराः शोभनभृत्याद्युपेताः सन्तो ज्योक् चिरकालं जीवेम प्राणान् धारयेम। यतो बलिहृतः अत [6]एवं स्यामेत्यभिप्रायः[6] ॥१०॥

इडायास्पदं घृतवत् सरीसृपं[7] जातवेदः प्रतिहव्या गृभाय।
ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि रन्तिरस्तु
स्वाहा[8] ॥११॥

[ अ स ३. १०. ६ ; कौशिक १३८. १० । गो गृ ४. १. १४ ; खा गृ ३. ४. २३ द्रः ]

**हे जातवेदः अग्ने प्रतिहव्या आभिमुख्येन हव्यानीमानि। शेश्छन्दसि बहुलमिति [पा ६. १. ७०] शेर्लोपः। गृभाय—ग्रह ग्रहणे—हृग्रहोर्भश्छन्दसीति [पा वा ८. २. ३२] ग्रहेर्हकारस्य भकारः। श्नाविकरणस्य छन्दसि शायजपीति [पा ३. १. ८४] हौ शायजादेशः। हे अग्ने त्वम् इडाया हविषः पदं स्थानं वर्तसे। किम्भूतम्—घृतवत्। पूर्णेन चतुर्गृहीतेन[9] सरीसृपम् अत्यन्तसर्पणस्वभावम्। यथा प्रज्वलितोऽपि कृष्णवर्त्मा देशान्तरं सर्पति एवं गृहीतहव्यो भवान् मया प्रार्थ्यते। ये ग्राम्याः पशवो विश्वरूपा अनेकप्रकाराः सप्त पुरुषा-**

1 B[1] omits it. D[2] & G read उलूखलरूपेण परिणता ग्रावाणः probably taken from Guṇaviṣṇu.
2 D[2] & G सम्यक्
3 D[2] & G ०शब्दमुत्पादयन्तीत्यर्थः
4 D[2] पाषाणाः साधनाश्च
5 D[2] & G omit रूप.
6 B[1] जीवेमेत्य० ; M[1] एव वयं स्यामे०
7 *Āśv. Śr.* 2. 2. 7 ; *Āp. Śr.* 6. 5. 7 ; *M. Śr.* 1. 6. 1. 15—चराचरं
8 C omits स्वाहा.
9 See *G. Gṛ.* 4. 1. 13—चतुर्गृहीतमाज्यं गृहीत्वा.

**श्वादयः[1] ये च सप्तारण्या गौरशरमादयः तेषां मयि रन्तिः मद्विषये रमणं प्रीतिरस्तु भवत्वित्यर्थः ॥११॥**

अथ द्वितीयो मन्त्रः—इडायास्पदमिति। त्रिष्टुबस्य च्छन्दः। अग्निर्देवता।

हे जातवेदो जातविद्य जातधन वाग्ने त्वमिडाया मनोः पुत्र्या गोरूपायाः पदं स्थानमुत्तरवेदिलक्षणम्। घृतवद् घृतोपेतम्। इडा वै मानवी यज्ञानुकाशिन्यासीत्[2]। सा यत्र यत्र न्यक्रामत्ततो घृतमपीड्यत तस्माद् घृतपद्युच्यते इति हि श्रुतिः[3]। यद्वा इडा भूमिस्तस्याः पदमुत्तरवेदिलक्षणम्। तच्च घृतवद् दीप्तिमद् घृतोपेतं वा सरीसृपं सरणायोग्यम्। तत्र प्रतिष्ठितः सन् हव्या हवींषि प्रतिगृभाय गृहाण। हव्येत्यत्र शेश्छन्दसि बहुलम् [पा ६. १. ७० ] इति शेर्लुक्। गृभायेति हृग्रहोः [पा वा ८. २. ३२ ] इति भत्वम्। छन्दसि शायजपि [ ३. १. ८४ ] इति शायजादेशः। ये ग्राम्या [4]ग्रामे भवाः[4] पशवो विश्वरूपा गवादिभेदेन नानारूपास्तेषां सप्तानां गवाश्वोष्ट्रमहिषाजाविपुरुषभेदेन सप्तविधानां रन्तिः क्रीडनं मय्यस्तु भवतु ॥११॥

**चतुर्थीपञ्चमीभ्यां जुहुयात् [गो गृ ४. १. १६ द्रः]**

एषैव सा या पूर्वा व्यौच्छत् सेयमप्स्वन्तश्चरति प्रविष्टा।
वसूर्जिगाय प्रथमा जनित्री विश्वे ह्यस्यां महिमानो अन्तः ॥१२॥

[ गो गृ ४. १. १६ ; खा गृ ३. ४. २३ द्रः ]

**एषा एव सा अष्टका या पूर्वा प्रथमा व्यौच्छत्। उच्छी विवासे। विवासः प्रकाशः[5]। प्रकाशते स्म। किञ्च सा इयम् अप्सु पानीयेषु अन्तः मध्ये चरति गच्छति। प्रविष्टा वरुणस्यात्मभूता वसूः वसूनि धनानि जिगाय जनितवती। अनेकार्थत्वाद्धातूनां जयत्यत्र जनयत्यर्थे वर्तते। प्रथमा प्रधाना जनित्री कामानामुत्पादयित्री उषा एषा। हि यस्मादर्थे। यस्मादस्यामुषसि**

1 A & I पुरुषा अन्यजातीयाः; B पुरुषा अन्यजादयः. Cf. *Tāṇḍyamahābrāhmaṇa* 6.8: नानारूपा ग्राम्याः पशवः—Sāyaṇa on the same: पुरुषोऽश्वो गौरविरजो गर्दभोऽश्वतर इति।

2 *T. Br.* 1. 1. 4. 4

3 *T. S.* 2. 6. 7. 1

4 M[1] & M[2] ग्रामार्हाः

5 Sāyaṇa interprets विवासो वर्जनम्। तमो व्युदसितवती.

**विश्वे सर्वे महिमानः सूर्याग्निचन्द्रमसः अन्तर्मध्ये वर्तन्ते तस्मादेनां यजामह इत्यपेक्षते ॥१२॥**

अथ तृतीयः—एषैष सा या पूर्वेति। त्रिष्टुप् छन्दः। एकाष्टका[1] देवता।

एषैवैकाष्टकैव[2] सा प्रसिद्धा वक्ष्यमाणा या पूर्वा प्रथमा सूर्यादिभ्यः प्रथमभाविनी सती व्यौच्छत्। उच्छी विवासे। विवासो वर्जनम्। तमो व्युदसितवती[3]। किं च सेयमेकाष्टका अप्स्वन्तर्व्याप्तेषु रश्मिषूदकेष्वन्तरिक्षप्रदेशेषु[4] वा मध्ये प्रविष्टा समीपे चरति गच्छति। किं चैवं महानुभावैषा प्रथमा सर्वेषां प्रथमभूता मुख्या जनित्री [5]सर्वस्योत्पादयित्री सती वसूर्वस्तव्यानि धनानि जिगायास्मदर्थं जितवती। सन्लिटोर्जेः [ पा ७. ३. ५७ ] इत्यभ्यासादुत्तरस्य कुत्वम्। वसुजयसंभावनामाह[6]। हि प्रसिद्धौ। अस्यामुषोरूपायामष्टकायामन्तर्मध्ये[7]। विश्वे महिमानः सर्वाणि बहुधनवत्त्वादीनि माहात्म्यानि। वर्तन्त इति शेषः। तस्मादहं भजामह इत्युपपद्यते ॥१२॥

## एषैव सा या प्रथमा व्यौच्छत् सा धेनुरभवद्विश्वरूपा।
## संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली ॥१३॥

[ गो गृ ४. १. १६; खा गृ ३. ४. २३ द्रः ]

**बृहत्यस्य च्छन्दः। शेषं पूर्ववत्।**

**एषैव सा या प्रथमा व्यौच्छदित्युक्तार्था[8]। सा अष्टका धेनुरिव अभवत् भूतवती देवानां हविःप्रदानेन लोकानां च दुग्धप्रदानेन। विश्वरूपा नानारूपा कामदुघेत्यर्थः। किञ्च संवत्सरस्य या पत्नी यज्ञसंयोगभाक्त्वेन। तथा चोक्तम्[9]—एषा वै संवत्सरस्य पत्नी यदेकाष्टका। सा एवम्भूता नः अस्माकं सुमङ्गली शोभनमङ्गलदात्री अस्तु भवतु ॥१३॥**

1 B[1], D[2], G अष्टका
2 B[1], D[2] & G एषैवैषाष्टकैव
3 D[2] विध्वंसितवती ; G विदंसितवती
4 B[1] ०ष्वन्तरितप्रदेशेषु ; M[1] & M[2] ०ष्वन्तःप्रदेशेषु
5 D[2] & G सर्वेषामुत्पाद०
6 D[2] & G संभावनान्महिमा
7 B[1], D[2] & G omit मध्ये.
8 This portion in the previous Mantra has been explained. See also Mantra 2. 2. 1.
9 *T. S.* 7. 4. 8. 1

अथ चतुर्थः—एषैव सा या प्रथमेति । बृहत्यस्य च्छन्दः । सैवाष्टका देवता ।

उक्तः प्रथमपदार्थः । विश्वरूपा बहुरूपधारिणी धेनुरभवत् । देवेभ्यो धेनुवत् प्रीणयित्री धेनुवत् पयःसम्पन्ना[1] । किञ्च याष्टका संवत्सरस्य पत्नी । एषा वै संवत्सरस्य पत्नी यदेकाष्टकेत्यध्वर्युब्राह्मणम्[2] । सा नोऽस्माकं सुमङ्गली शोभनमङ्गलदात्र्यस्तु भवतु ॥१३॥

**तथा षष्ठीसप्तमीभ्यां जुहुयात् । शेषमवदाय सौविष्टकृतमष्टम्या जुहुयात् [गो गृ ४. १. १६, १७]**

यां देवाः प्रतिपश्यन्ति रात्रीं धेनुमिवायतीम् ।
सा नः पयस्वती दुहा[3] उत्तरामुत्तरां समाम् ॥१४॥

[ अ स ३. १०. २—प्रतिनन्दन्ति । गो गृ ४. १. १६ ; खा गृ ३. ४. २४ द्रः ]

**मन्त्रत्रयस्यानुष्टुप् छन्दः । शेषं पूर्ववत् ।**

**हे अष्टके यां त्वां रात्रीं रात्रिं प्रति आयतीम् आगच्छन्तीं देवा इन्द्रादयः पश्यन्ति वीक्षन्ते धेनुमिव लोकाः सा नः अस्माकं पयस्वती प्रक्षरदाकाङ्क्षितक्षीरा उत्तरामुत्तरां समाम् उत्तरोत्तरं वर्षं दुहा दुग्धां कामान् पूरयतु ॥१४॥**

अथ पञ्चमः—यां देवा इति । अस्यानुष्टुप् छन्दः । पूर्ववद्देवता ।

यां रात्रिरूपां भूतानां प्रेरयित्रीं वाष्टकामायतीं धेनुमिव देवाः प्रतिपश्यन्ति सा नः पयस्वत्युत्तरामुत्तरां समामुपर्युपरि संवत्सरे दुहा[4] दुग्धाम्[5] ॥१४॥

संवत्सरस्य प्रतिमां यां त्वा रात्रि यजामहे ।
[6]प्रजामजर्यां नः कुरु रायस्पोषेण संसृज ॥१५॥

[ अ स ३. १०. ३ ; तै स ५. ७. २. १—प्रजां सुवीरां ; हि गृ २. १५. ६ ; पा गृ ३. २. २—प्रजां सुवीर्यां ; गो गृ ४. १. १६ ; खा गृ ३. ४. २४ द्रः ]

1 D² & G धेनुः
2 *T. S.* 7. 4. 8. 1
3 For variants see 2. 2. 1. fn.
4 On previous occasions (1.8.7 and 2. 2. 1) Sāyaṇa adopted the reading दुहाम्, but here as also later on ( 2.8.1 ), he explains दुहा.
5 D² & G दुग्धा
6 Sāyaṇa adopts अजय्याम्.

संवत्सरस्य प्रतिमां शरीरभूताम्। अहोरात्रौ हि संवत्सरस्य पक्षादिक्रमेण शरीरम्। नहि ताभ्यां विना तद्भावः। यां त्वा त्वाम् हे रात्रि यजामहे पूजयामः सा त्वमस्माभिः पूजिता सत्येवमुच्यसे। प्रजां पुत्रादिकाम् अजर्याम् अजरणीयां नः अस्माकं कुरु। किञ्च रायस्पोषेण महता धनेन पोषेण समर्धनेन[1] संसृज संबध्नीहि। नः प्रजामिति सम्बन्धः ॥१५॥

अथ षष्ठः—संवत्सरस्य प्रतिमामिति। पूर्ववच्छन्दोदेवते।

संवत्सरस्य प्रतिमां प्रतिनिधिरूपां यां त्वा त्वां हे रात्रि अष्टकादेवते[2] यजामहे[3] पूजयामि। नोऽस्माकं प्रजां पुत्रादिलक्षणामजर्यामन्यैर्जेतुमशक्यां कुरु। किं च रायस्पोषेण धनपुष्ट्या संसृजास्मान् संयोजय ॥१५॥

अन्विमं[1] नो अनुमतिर्यज्ञं देवेषु मन्यताम्।
अग्निश्च हव्यवाहनः स नो दाद्दाशुषे मयः ॥१६॥

[ गो गृ ४. १. १७ ; खा गृ ३. ४. २५ द्र: ]

इमं नः अस्माकं यज्ञं देवेषु इन्द्रादिषूपक्लृप्तम् अनुमतिः सर्वेषां कर्मणामनुमन्त्री अनुमन्यताम्। तथा ह्यनुमतं कर्म फलदानोन्मुखं भवति। किञ्च योऽग्निश्च हव्यवाहनो देवार्थं हव्यं वहति। वह प्रापणे। देवान् प्रापयति। स नः अस्माकं मयः सुखं दात् दद्यादिति प्रार्थ्यते। दादिति लेट्। स च छन्दसि लिङर्थे लेडिति [पा ३. ४. ७] स्मर्यते। अन्विममित्यनुशब्दो व्यवहितोऽपि मन्यतामित्यनेन क्रियापदेन सह संबध्यते। स नः सम्बन्धिने दाशुषे यजमानाय दादिति सम्बन्धः ॥१६॥

इति भट्ट-गुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये
द्वितीयप्रपाठके द्वितीयः खण्डः ॥

1 A & I समर्थेन
2 D² omits अष्टकादेवते.
3 D² यजामि
4 Vedic Concordance reads अन्वियं.

अन्विमं न इत्ययं मांसस्विष्टकृद्धोमे विनियुक्तः । तथा च सूत्रम् [ खा गृ ३. ४. २५ ]—सौविष्टकृतीमष्टम्येति । प्रथममन्त्रापेक्षयास्याष्टमीत्वम् ।

पाठस्तु—अन्विमं न इति । अनुष्टुबस्य च्छन्दः । अग्निर्देवता ।

अनुमतिर्देवता देवेष्विमं यज्ञं यागमनुमन्यताम् । मया क्रियमाणमिमं यागं देवेभ्योऽनुमतिरनुज्ञायतामित्यर्थः । किं च हव्यवाहनोऽग्निर्दाशुषे [1]हविःप्रदानशीलाय यजमानाय[1] । नो मह्यम् । वचनव्यत्ययः । मयः सुखं दात् ददातु[2] ॥१६॥

॥*॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणमन्त्रपर्वणि द्वितीयप्रपाठके द्वितीयः खण्डः ॥*॥

---

1 D² & G दात्रे 2 D² & D अदात्

## द्वितीयप्रपाठके तृतीयः खण्डः

स्वाहा सोमाय पितृमते ॥१॥

[ गो गृ ४. २. ३६ ; खा गृ ३. ५. १२ ]।

स्वाहाऽग्नये कव्यवाहनाय ॥२॥

[ गो गृ ४. २. ३६ ; खा गृ ३. ५. १२ ]।

**यः पितृणां सोमस्तस्मै स्वाहा। [1]सोममण्डलाधारत्वात् पितृणां पितृमान् सोमः[1] ॥१॥**

**यजुर्द्वयमुपघातहोमे विनियुक्तं पितृदेवताकम्।**

**कव्यं पित्र्यं हविः तद्वहतीति कव्यवाहनोऽग्निः। कव्य-पुरीष-पुरीष्येषु ञ्युट् [पा ३. २. ६५]। तस्मै स्वाहा ॥२॥**

नवमीं दशमीं वान्वष्टक्यमित्यादिसूत्रोक्तायामन्वष्टक्यां[2] पूर्वमष्टकायामवशेषितसक्थ्नो[3] मांसमवदाय स्थाल्यन्तरे मेक्षणान्तरेणोदायुवन् श्रपयित्वा[4] स्वाहा सोमायेति मन्त्रद्वयेन जुहुयात्। तथा च सूत्रम् [ खा गृ ३. ५. १२ ]—कंसे समवदाय मेक्षणेनोपघातं जुहुयात् स्वाहा सोमाय पितृमते स्वाहाग्नये कव्यवाहनायेतीति।

पाठोऽप्येवमेव—यजुर्मन्त्राविमौ पितृमान् सोमः कव्यवाहनोऽग्निश्च देवते।

पितृमतेऽग्निष्वात्तादिपितृयुक्ताय सोमाय। स्वाहेति हविरभिधानम्। हविर्दत्तमित्यर्थः। तथा कव्यवाहनाय। कव्यं पितृभ्यो दीयमानं हविस्तस्य वाहनाय प्रापयित्रेऽग्नये स्वाहा। कव्यवाहनसंज्ञकायाग्नय इत्यर्थः। त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणां सहरक्षा असुराणामिति हि श्रुतिः[5] ॥१, २॥

1 B & I omit it.

2 See *Kh. Gṛ.* 3. 5. 1.

3 See *Kh. Gṛ.* 3. 4. 16.

4 See Rudra on *Kh. Gṛ.* 3. 5. 3.

5 *T. S.* 2. 5. 8. 6.

दक्षिणाग्रां रेखामुल्लिखेत् [गो गृ ४. ३. २]

अपहता असुरा रक्षांसि वेदिषदः ॥३॥

[ वा स २. १६ ; गो गृ ४. ३. २ ; खा गृ ३. ५. १३ ; जै गृ २. २—रक्षांसि पिशाचाः पितृषदः ]

यजुरिदं दक्षिणाग्रलेखोल्लेखने विनियुक्तं पितृदेवताकम् ।

अपहता अपनीताः असुरा विरोचनादयः रक्षांसि च राक्षसाः वेदिषदः वेदिगताः । भवन्त्विति वाक्यशेषः ॥३॥

ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति ।
परा पुरो नि पुरो ये भरन्त्यग्निष्टाँल्लोकात् प्रणुदत्वस्मात् ॥४॥

[ वा स २. ३० । गो गृ ४. ३. ३ ; जै गृ २. २—प्रणुनोत्त्वस्मात् ]

त्रिष्टुबस्य च्छन्दः । दक्षिणार्धे कर्षूणामुल्मुकस्थापने विनियोगः । अग्निर्दैवता ।

ये रूपाणि रौद्राणि रूपान्तराणि प्रतिमुञ्चमाना गृह्णाना बलात् असुरा हविर्भागबहिष्कृताः सन्तः स्वधया पित्र्येण हविषा चरन्ति जीवन्ति । ये च परा पुरः अग्रतोऽवस्थितानपि देवान् पराभरन्ति ये च नि पुरः पुरस्तादवस्थितानपि निघ्नन्ति हिंसन्ति । अनुपात्तमपि क्रियापदमत्रोपसर्गोपादानसामर्थ्याल्लभ्यते । न हि प्रादीनां केवलानां प्रयोगोऽस्त्युपसर्गाः क्रियायोगे [ पा १. ४. ५९] इति स्मरणात् । ये च देवानामुपक्लृप्तं हव्यं भरन्ति हरन्ति । हृग्रहोर्भश्छन्दसीति [पा वा ८. २. ३२] हरतेर्हकारस्य भकारः । तान् सर्वानसुरान् विरोचनादीन् भगवान् अग्निः प्रणुदतु प्रकर्षेण प्रेरयतु अस्मात् भूलोकतो वेदिस्थानाद्वा । ४॥

होमसमाप्त्यनन्तरमपहता इत्यनेन कर्षूणां दक्षिणभाग उल्मुकं निदध्यात् । तथा च सूत्रम् [ खा गृ ३. ५. १३ ]—[1]अत ऊर्ध्वं प्राचीनावीती[1] सव्येनोल्मुकं दक्षिणतः कर्षूषु निदध्यादपहता इतीति ॥ सव्येन हस्तेन कर्षूः प्रज्वाल्य तासां दक्षिणत उल्मुकं निदध्यादित्यर्थः । प्रणुदत्वस्मादिति मन्त्रान्तः । तत्रापहता इत्यादिर्वेदिषद इत्यन्तो यजुर्भागः ।

1 In the editions of *Kh. Gr.*, this is not shown as part of the Sūtra.

शिष्टः पादबन्धः। अथ शिष्टस्य त्रिष्टुप् छन्दोऽग्निर्देवता। केचन यजुर्भागं दक्षिणाग्रलेखाकर्षणे विनियुञ्जते। अवशिष्टं तूल्मुकनिधाने।[1]

पाठस्तु—अपहता इति। ये रूपाणीति च।

असुरा वेदिषदो वेद्यां सीदन्तोऽपहताः प्रनष्टाः। भवन्त्विति शेषः। असुराणां वेद्यां प्रसक्तिं दर्शयति। ये वस्तुतोऽसुरा देवविरोधिनः पश्चात् स्वधया पिण्डायन्नेन निमित्तेन। स्वधेत्यन्ननाम। रूपाणि प्रतिमुञ्चमाना अन्यैर्दुर्विज्ञेयानि स्वरूपाणि धारयमाणा वेदिषदः सन्तश्चरन्ति। किञ्च ये पुरः पुरोदेशे पराभरन्ति देवेभ्यो दत्तं हविः [2]पराहरन्ति। तथा पुरः पुरस्तान्नि नितरां हरन्ति। हृग्रहोर्भश्छन्दसि [ पा वा ८. २. ३२ ] इति भत्वम्। तान् सर्वानसुरानस्माल्लोकात्। लोक्यत इति लोकः। पिण्डदानस्य [3]निधानात् कर्षूप्रदेशात् प्रणुदतु प्रकर्षेण प्रेरयतु ॥३, ४॥

**एत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः।**
**दत्तास्मभ्यं द्रविणेह भद्रं रयिञ्च नः सर्ववीरं नियच्छत ॥५॥**

[ गो गृ ४. ३. ४ द्रः ]

**यजुरिदं पित्रावाहने विनियुक्तं पितृदेवताकम्।**

**हे पितरः इह पिण्डपितृयज्ञे यूयम् एत आगच्छत प्रत्यक्षीभवत। किम्भूताः—सोममर्हन्तीति सोम्यासः सोम्याः आज्जसेरसुगिति [पा ७. १. ५०] छन्दसि जसोऽसुगागमः। कैः—पथिभिः मार्गैः। किम्भूतैः—गम्भीरेभिः गम्भीरैः महापथैः तथा पूर्विणेभिः पूर्वपुरुषाचरितैः पूर्वदृष्टैर्वा। आगत्य च अस्मभ्यं द्रविणा द्रविणानि नानाविधानि धनानि दत्त प्रयच्छत। यैर्वयं निर्वृताः[4] सन्तो युष्मदाराधनयोग्या भवाम। किञ्च भद्रम्। भदि कल्याणे सुखे च। कल्याणं सुखं वा। नः अस्मभ्यं दत्तेति सम्बन्धः। अन्यच्च हे पितरः रयिं च धनं च नः नियच्छत नितरां यच्छत ददध्वम्। किम्भूतम्—सर्ववीरं सर्वे वीराः पुत्रपौत्रादयो येन रयिणा यावज्जीवं धनिनो भवन्ति। द्रविणरयिशब्दयोरेकार्थत्वेऽपि पृथक्क्रियायोगादपौनरुक्त्यम् ॥५॥**

1 See *G. Gṛ.* 4. 3. 2 & 3. See also Guṇ's *Bhāṣya* above.

2 D² & G परापहरन्ति

3 B¹ M¹ & M² omit निधानात्.

4 I निश्चिताः

एत पितर इति पित्रादीनावाहयेन्मन्त्रलिङ्गात् ।

एत पितर इति । अनुष्टुप्छन्दस्कोऽयं पितृदेवताकः ।

हे पितरः सोम्यासः सोमसम्पादिनः । सोमयागं कृत्वा बर्हिषत्संज्ञां दधाना इत्यर्थः । एवंभूता एतागच्छत । कैर्मार्गैरित्युच्यते । गम्भीरेभिर्गम्भीरैर्निम्नैः । अवाङ्मुखैरित्यर्थः । पूर्विणेभिः पूर्विणैः । पूर्वकालसंबन्धिनः पूर्विणाः । पूर्वं य आगता इत्यर्थः । तादृशैः पथिभिर्मार्गैः । आगत्य चास्मभ्यमिहास्मिन् कर्मणि द्रविणा द्रविणानि भद्रं कल्याणं च दत्त्वा नोऽस्मभ्यं सर्ववीरं बहुविधभृत्योपेतं रयिं च गवादिधनं च नियच्छत नितरां धत्त ॥५॥

**पिण्डान् निधाय जपति [गो गृ ४. ३. ११]**

## अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् ॥६॥

[ वा स २. ३१ । गो गृ ४. ३. ११ ; खा गृ ३. ५. १७ द्रः ]

**यजुरिदं जपे विनियुक्तं पितृदेवताकम् । एवमुत्तरमपि ।**

**हे पितरः अत्र पिण्डेषु मादयध्वम् । मदिस्तृप्त्यर्थश्चुरादौ पठ्यते । तृप्यत । यथाभागं च यो यो यस्य भागस्तम् । आवृषायध्वम् अभिलषत । वृषशब्दात् कर्तुः क्यङ् सलोपश्च [पा ३. १. ११] । लोण्मध्यमपुरुषबहुवचनम् ॥६॥**

अत्र पितर इति पिण्डनिधानानन्तरं जपेत् । तथा च सूत्रम् [ खा गृ ३. ५. १७ ]— पिण्डान्निधाय जपेदत्र पितरो मादयध्वम् यथाभागमावृषायध्वमिति ॥

पाठस्तु—अत्र पितर इति । यजुरिदं पितृदेवताकम् ।

सर्वत्र पितर इत्यस्य स्थाने पितृपितामहप्रपितामहान् क्रमेण निर्दिशेत् । हे पितरोऽत्रास्मिन् पिण्डकर्मणि मादयध्वं तृप्ता भवत । तदर्थं यथाभागं स्वं स्वं पिण्डभागमनतिक्रम्यावृषायध्वम् आ सर्वतो वृषा इवाचरत । वृषो [1]यथान्यवृषभनिर्वर्तनेन स्वविषये रमते तथा कुरुत ॥६॥

**अभिपर्यावर्तमानो जपेत् [गो गृ ४. ३. १२]**

## अमीमदन्त पितरो यथाभागमावृषायिषत ॥७॥

[ वा स २. ३१ । गो गृ ४. ३. १२ ; खा गृ ३. ५. १६ ; जै गृ २. १ द्रः ]

**अनेन पिण्डदानेन पितरः अमीमदन्त तृप्तवन्तः हर्षं प्राप्तवन्तः । यो यस्य भागः यथाभागम् आवृषायिषत अभिलषितवन्तः गृहीतवन्त इति यावत ॥७॥**

1 D² यथान्यविषयनिवर्तनेन

अमीमदन्तेत्यस्य विनियोगः सूत्रितः [ खा गृ ३. ५. १६ ] उपताम्य कल्याणं ध्यायन्नभिपर्यावर्तमानो जपेदमीमदन्त पितरो यथाभागमावृषायिषतेतीति ॥ यथाशक्ति निरुच्छ्वास आसीन उच्छ्वास्येदं मेऽस्त्वित्यभिलषितं ध्यायन् जपेदित्यर्थः[1] ।

अमीमदन्तेति । यजुरयं मन्त्रः । पितर एव देवताः ।

पितरः पिण्डैरमीमदन्त मत्तास्तृप्ता अभवन् । यथाभागं स्वं स्वं पिण्डभागमादायावृषायिषत आ सर्वतो वृषा इवाचरणमकुर्वन् । वृषभा यथा तृप्ताः सञ्चरन्ति तथा अकुर्वन्नित्यर्थः ॥७॥

**पूर्वस्यां कर्ष्वां दक्षिणोत्तानौ पाणी कृत्वा जपति [गो गृ ४. ३. १८ द्रः]**

**नमो वः पितरो जीवाय नमो वः पितरः शूषाय ॥८॥**

[ वा स २. ३२ ; तै स ३. २. ५. ५ ; गो गृ ४. ३. १८ ; खा गृ ३. ५. २४ ]

**मध्यमायां सव्योत्तानौ पाणी कृत्वा जपति [गो गृ ४. ३. १९ द्रः]**

**नमो वः पितरो घोराय नमो वः पितरो रसाय ॥९॥**

[ वा स २. ३२ ; तै स ३. २. ५. ६ । गो गृ ४. ३. १९ ;
खा गृ ३. ५. २५ ; जै गृ २. २ द्रः ]

**उत्तमायां दक्षिणोत्तानौ पाणी कृत्वा जपति [गो गृ ४. ३. २० द्रः]**

**नमो वः पितरः स्वधायै नमो वः पितरो मन्यवे ॥१०॥**

[ वा स २. ३२ ; तै स ३. २. ५. ५ । गो गृ ४. ३. २० ;
खा गृ ३. ५. २६ ; जै गृ २. २ द्रः ]

**प्रागूर्जं वहन्त्या यजूंष्येतानि पिण्डपितृयज्ञे विनियुक्तानि पितृदेवताकानि ।**

**हे पितरः वः युष्माकं मध्ये यो जीवाख्यः तस्मै नमः । यश्च शूषाख्यः बलाख्यः तस्मै नमः ॥८॥**

**घोराय घोराख्याय । रसाय अभिलाषाख्याय । शेषमुक्तार्थम् ॥९॥**

**स्वधायै अन्नरूपाय । मन्यवे क्रोधरूपाय । शेषं गतार्थम् ॥१०॥**

अथ निह्नवः [ खा गृ ३. ५. २३. द्रः ]—नमो व इत्यादीनां षण्णां यजुषां मध्ये द्वयोर्द्वयोरेकैको विनियोगः । तत्र प्रथमयजुर्द्वयस्य विनियोगः सूत्र्यते [ खा गृ ३. ५. २४ ]—पूर्वस्यां कर्ष्वां दक्षिणोत्तानौ पाणी कृत्वा नमो वः पितरो जीवाय नमो वः पितरः शूषायेति ॥

1 See Rudra on *Kh. Gṛ.* 3. 5. 19.

प्रथमकर्ष्वाः पश्चात् समीपे दक्षिणं पाणिं प्रागग्राङ्गुलिमुत्तानं भूमौ निधाय तदुपरि तथैव सव्यं न्यञ्चं कृत्वा जपेदिति सूत्रार्थः[1]।

हे पितरो वो युष्माकं संबन्धिने जीवाय जीवनगुणाय नमो नमस्कारोऽस्तु। तथा हे पितरो वः शूषाय। शूष इति बलनाम। युष्माकं बलाय नमः ॥८॥

अथ द्वितीययजुर्द्वयस्य विनियोगः सूत्र्यते [ खा गृ ३. ५. २५ ]—सव्योत्तानौ मध्यमायां नमो वः पितरो घोराय नमो वः पितरो रसायेतीति॥ सव्यस्योपरि [2]दक्षिणं न्यञ्चं कृत्वेति सूत्रार्थः।[3]

घोरं भयजननसामर्थ्यम्। रसः सारभागः स्थैर्यम्[4]। शिष्टमुक्तम् ॥९॥

अथ तृतीययजुर्द्वयस्य विनियोगः सूत्र्यते [ खा गृ ३. ५. २६ ]—दक्षिणोत्तानौ पश्चिमायां नमो वः पितरः स्वधायै नमो वः पितरो मन्यव इतीति॥

स्वधा अन्नम्[5]। मन्युः क्रोधः। शेषं पूर्ववत्। हे पितरो युष्माकं गुणा यतः प्रत्येकं वन्द्या[6] अतस्तेभ्यो नमस्करोमीति सर्वस्यार्थः ॥१०॥

**अथाञ्जलिकृतो जपति [गो गृ ४. ३. २१]**

## नमो वः पितरः पितरो [7]नमो वः[7] ॥११॥

[ वा स २. ३२। गो गृ ४. ३. २१; खा गृ ३. ५. २७ ]

**हे पितरः वः युष्मभ्यं नमः ॥११॥**

**गृहानवेक्षते [गो गृ ४. ३. २२]**

## गृहान्नः पितरो दत्त ॥१२॥

[ वा स २. ३२। गो गृ ४. ३. २२; जै गृ २. २ ]

**हे पितरः भवन्तो मया प्रार्थ्यन्ते। यूयं गृहान् गेहानि नः अस्मभ्यं दत्त प्रयच्छत गृहिण्या संयुक्तं मां कुरुध्वमित्यर्थः। अत्र च 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते' इति[8] गृहिणीप्रार्थनं वाक्यार्थः ॥१२॥**

1 See Rudra on *Kh. Gr.* 3. 5. 24.
2 M¹ & M² अपसव्यं
3 See Rudra on *Kh. Gr.* 3. 5. 25.
4 D² & G omit स्थैर्यम्.
5 G, M¹ & M² omit अन्नम्.
6 D² द्वन्द्वम्; G द्वन्द्वा; M¹ यद्वा
7 Vedic Concordance वो नमः
8 *Mahābhārata*, Śānti 185. 6

**पिण्डानवेक्षते [गो गृ ४. ३. २३]**

**सदो वः पितरो देष्म ॥१३॥**

[ वा स २. ३२—सतो वः । आप श्रौ १. १०. ३ ; गो गृ ४. ३. २३ ]

**हे पितरः वः युष्मभ्यं सदः स्थानं वयं देष्म दातारः सन्तत्यविच्छित्तिद्वारेण ॥**

नमो व इति पितॄन् नमस्काराञ्जलिं कृत्वोपतिष्ठते । सूत्रितं च [ खा गृ ३. ५. २७]—अञ्जलिं कृत्वा नमो व इतीति ॥

पूर्वभागः स्पष्टः । हे पितरो गृहान् नोऽस्मभ्यं[1] दत्त प्रयच्छत । तथा सत्यस्मदीयेषु गृहेषु वो युष्मभ्यं सदः स्थानं देष्म ददाम । पुनरवरोहवचनमादरा र्थम्[2] ॥११-१३॥

**पिण्डानामुपरि सूत्रं ददाति**

**एतद्वः पितरो वासः ॥१४॥**

[ वा स २. ३२—वास आधत्त । खा गृ ३. ५. २८ ; जै गृ २. २ ]

**निगदव्याख्यातः ॥१४॥**

एतद्व इत्ययं कर्षूषु पिण्डोपरि [3]सूत्रतन्तुसमर्पणे विनियुक्तः । तथा च सूत्रम् [ खा गृ ३. ५. २८ ]—सूत्रतन्तून् कर्षूषु निदध्याद्यथापिण्डमेतद्व इति ॥

यजुरिदं वासोदेवताकम् । हे पितरो वो युष्माकमेतद्दीयमानतन्तुरूपं[4] वास आच्छादनयोग्यं वस्त्रम् ॥१४॥

**पिण्डान् परिषिञ्चेत् [गो गृ ४. ३. २६]**

**ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् ।**
**स्वधा स्थ तर्पयत मे पितॄन् ॥१५॥**

[ वा स २. ३४ । गो गृ ४. ३. २६ ; खा गृ ३. ५. २६ द्र: ; जै गृ २. २ ]

**पिपीलिकमध्योष्णिगस्य च्छन्दः । पिण्डपरिषेके विनियोगः । पितरो देवताः ।**

1 D[2] नोऽस्माकं
2 B[1] पुनः पितरो नमो व इति वचन० ; D[2] omits the sentence ; M[1] & M[2] पुनरपरोक्षवचन०
3 B[1], D[2] & G omit तन्तु.
4 D[2] omits दीयमान.

**हे आपः। यूयं मे पितॄन् तर्पयत प्रीणयत। किञ्च स्वधा स्थ अन्नं भवथ। स्वधा हि पितॄणां परमाशीः। तया पितरोऽतीव तृप्यन्ते। किं कुर्वत्यः— ऊर्जं परमान्नरसम् अमृतं जरामृत्युविनाशि घृतं सर्पिः पयः क्षीरं परिस्रुतं सुरां कीलालं पक्वमन्नं वहन्तीः वहन्त्यः पितृभ्यः प्रापयन्त्य इति यावत् ॥१५॥**

ऊर्जं वहन्तीरित्ययं कर्ष्वभिमन्त्रणे विनियुक्तः। सूत्रितं च [ खा गृ ३. ५. २६ ]—ऊर्जं वहन्तीरिति [1]कर्षूरनुमन्त्रयेतेति ॥

पाठस्तु—ऊर्जं वहन्तीरमृतमिति। पिपीलिकमध्योष्णिक् छन्दः। कर्षवो देवताः।

हे कर्षवो यूयम् ऊर्जम्—अन्ननामैतत्—अन्नम्। अमृतममरणम्। घृतमाज्यम्। पयः क्षीरम्। कीलालमुदकम्। परिस्रुतं सुरां च। वहन्त्यो भवथ। किञ्च यूयं स्वधा स्थ स्वधारूपा भवथ। अतोऽन्नेन पितॄंस्तर्पयत प्रीणय ॥१५॥

**मध्यमं पिण्डं पत्नी पुत्रकामा प्राश्नीयात् [गो गृ ४. ३. २७]**

आधत्त पितरो गर्भं कुमारं पुष्करस्रजम्।
यथेह पुरुषः स्यात् ॥१६॥

[ वा स २. ३३। गो गृ ४. ३. २७ ; खा गृ ३. ५. ३० द्र: ; जै गृ २. २—पुरुषोऽसत् ]

**गायत्रमस्य च्छन्दः। मध्यमपिण्डप्राशने विनियोगः। पितरो देवताः।**

**हे पितरः इह पिण्डे तथा यूयं गर्भम् आधत्त स्थापयत। कुमारं पुत्रं न दुहितरम्। पुष्करस्रजम् पद्ममालां दधतम्। अश्विनोस्तुल्यमित्यर्थः। तौ हि सर्वत्र पुष्करस्रजावुपलक्ष्येते। यथा पुरुषः स्यात् भवेत्। कुमारत्वेन पुरुष इति लब्धे पुनस्तद्ग्रहणं विशिष्टपुरुषप्रतिपत्त्यर्थम् ॥१६॥**

आधत्त पितर इति मध्यमं पिण्डं पुत्रार्थिनी प्राश्नीयात्। सूत्रितं च [ खा गृ ३. ५. ३० ]—मध्यमं पिण्डं पुत्रकामां प्राशयेदाधत्तेतीति ॥

पाठस्तु—आधत्त पितर इति। गायत्री च्छन्दः। पितरो देवताः।

हे पितरो यूयमस्यां गर्भमाधत्त स्थापयत। स एव विशेषेणोच्यते[2]। पुष्करस्रजं [3]पूजाकरस्रग्योग्यं कुमारं गर्भमाधत्त। पुस्करं वपुष्करं पूजाकरं वेति निरुक्तं च [ नि ५. १४ ]।

1 D² कर्षूरभिमन्त्र०
2 D² & G विशेषेणाप्युच्यते
3 B¹ पुष्करस्रग्योग्यं ; M¹ & M² पद्माकारस्रजं

यथेहास्यां पुरुषः सामर्थ्योपेतः पुत्रः स्याद्भवेत्तथा गर्भमाधत्तेति समन्वयः। कुमारग्रहणेनैव पुरुषत्वे सिद्धे पुनर्ग्रहणं विशिष्टपुरुषप्रतिपत्त्यर्थम् ॥१६॥

**उल्मुकमद्भिरभ्युक्ष्य जपति [गो गृ ४. ३. २९]**

अभून्नो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वा।
प्रादात् पितृभ्यः स्वधया ते अक्षन् प्रजानन्नग्ने पुनरेहि योनिम् ॥१७

[ आप श्रौ १. १०. १४—प्रादाः। गो गृ ४. ३. २६ ; खा गृ ३. ५. ३१ द्रः ]

**त्रिष्टुप् छन्दः। उल्मुकाभ्युक्षणे विनियोगः। पितरो देवताः।**

**जातवेदा अग्निः। हव्यानि हवींषि सुरभीणि सुगन्धीनि रुचिकराणि कृत्वा अवाट् देवानां च पितॄणां च प्रापितवान्[1]। नः अस्माकं हविषः चरुपुरोडाशादेः दूतः प्रापकः अभूत् बभूव। किञ्च तानि वोढा स्वधया करणभूतया पितृभ्यः प्रादात् प्रदत्तवान्। ते च पितरः तानि जातवेदसा ढौकितानि अक्षन्—अद्‌ऌ भक्षणे—भक्षितवन्तः। इत्येवं प्रजानन् विदन् हे अग्ने आयुःस्वरूपं पुनरेहि आगच्छ। योनिमुत्पत्तिस्थानं निवृत्तकार्यत्वात् ॥१७॥**

अभून्न इत्ययमुल्मुकस्याग्नौ स्थापने विनियुक्तः। सूत्रितं च [ खा गृ ३. ५. ३१ ]—अभून्नो दूत इत्युल्मुकमग्नौ प्रक्षिपेत् ॥ यद्दक्षिणतो निहितमिति[2]।

पाठस्तु—अभून्नो दूत इति। त्रिष्टुप् छन्दः। उल्मुकाग्निर्देवता।

अयं जातवेदा अग्निर्देवो नोऽस्माकं [3]सम्भाविते हविषः प्रापणे दूतोऽभूद्दूतस्थानीयोऽभवत्। तथाभूतः सन्नस्मद्दत्तानि हव्यानि सुरभीणि सुगन्धयुक्तानि कृत्वा अवाट् देवेभ्यः पितृभ्यश्चावहदनयत्। नीत्वा च पितृभ्यः प्रादाद्दत्तवान्। दत्तेन स्वधयान्नेन [4]ते पितरोऽक्षन् भोजनमकुर्वन्। अथ प्रत्यक्षवादः। हे अग्नेऽसुमर्थं प्रजानन् प्रकर्षेण [5]कर्तव्यं सर्वं कृतमित्यधिगच्छन्[5]। अथवा यस्मादेवमभूदतः[6] स्वस्थानं प्रति पुनर्गन्तव्यमित्यर्थमधिगच्छन्[7]। योनिं स्वकीयं स्थानं पुनरेहि गच्छ ॥१७॥

1 B व्यापितवान्
2 D² and G add केवलेनानेनोल्मुकमग्निमभिक्षिपेदिति विनियुज्यते.
3 B¹, D² & G omit सम्भाविते.
4 D² omits ते.
5 D² & G जानन्
6 D² & G यस्मादेवंभूतः
7 D² & G ०मित्यवगच्छन्

वह वपां जातवेदः पितृभ्यो यत्रैतान् वेत्थ निहितान् पराचः ।
मेदसः कुल्या अभि तान्त् स्रवन्तु सत्या एषामाशिषः सन्तु
कामात्[1] स्वाहा ॥१८॥

[ वा स ३५. २०—पराके for पराचः, उप for अभि, संनमन्ताम् for सन्तु कामात् ; कारव स ३५. ५३—पराके, उप, कामाः । आ गृ २. ४. १३ ; शा गृ ३. १३. ३ ; पा गृ ३. ३. ६ ; आप म २. २०. २८—कामैः । गो गृ ४. ४. २२ ; खा गृ ३. ४. २६ द्रः ]

त्रिष्टुबस्य च्छन्दः । वपाहोमे विनियोगः । पितरो देवताः ।

हे भगवन् जातवेदः त्वमेवमस्माभिः प्रार्थ्यसे । वपाम् इदं पशुवपाद्रव्यं मया ह्रियमाणं पितृभ्यः पित्रर्थं वह प्रापय । यत्र यस्मिन् प्रदेशे एतान् पितॄन् स्वकर्मवशेन स्थितान् पराचः परं दूरं गतान् वेत्थ जानासि । हे जातवेदः भूयोऽपि प्रार्थ्यसे । तान् पितॄन् अभि आभिमुख्येन मेदसः धातुविशेषस्य[2] कुल्याः सरण्यः स्रवन्तु क्षरन्तु । एषाञ्च पितॄणां कामात्[1] ध्यानादिच्छामात्रेण कर्मणाम् आशिषः इष्टस्याप्राप्तस्यार्थस्य पुत्रग्रामादेरिच्छाः सत्याः तथ्याः फलवत्यः सन्तु भवन्तु । स्वाहेत्युक्तार्थम् ॥१८।

वह वपामित्ययं वपाहोमे विनियुक्तः [ खा गृ ३. ४. २६ द्रः ] ।

पाठस्तु—वह वपां जातवेद इति । त्रिष्टुबस्य च्छन्दः । पितरो देवताः ।

हे जातवेदो जातप्रज्ञ जातधन [3]वाग्ने वपां वपारूपं हविः पितृभ्यो वह प्रापय । पितरो विशिष्यन्ते । यत्र यस्मिन् स्थान एतान् पितॄन् पराचोऽवाङ्मुखान् । हविः कदागच्छतीत्याकाङ्क्षमाणानित्यर्थः । निहितान् स्थापितान् वेत्थ जानासि । किञ्च मेदसः कुल्या[4] वपारसस्य प्रवाहास्तान् पितॄनभि सर्वतः स्रवन्तु प्रवहन्तु । [5]एषामिदानीं प्रार्थिता वपाप्रापणादय आशिषः[6] आशीरूपाः कामाः[7] सत्याः सन्त्ववितथा भवन्तु । स्वाहा इदं द्रव्यं स्वाहुतमस्तु ॥१८॥

1 Sāyaṇa explains कामाः.
2 A धेनुविशेषस्य
3 D[2] अग्ने
4 M[2] adds सोमविशेषस्य कुल्याः.
5 B[1], M[1] & M[2] एत इदानीं
6 D[2] omits आशिषः.
7 Guṇaviṣṇu reads कामात्.

जातवेदो वपया गच्छ देवांस्त्वं हि होता प्रथमो बभूव ।
सत्या वपा प्रगृहीता मे अस्तु समृध्यतां मे यदिदं
करोमि ॥१९॥

[ तै स ३. १. ४. १४ ; काठ स ३०. ८ द्रः—बभूथ । मा गृ २. ४. ५ द्रः ।
गो गृ ४. ४. २३ ; खा गृ ३. ४. २७ द्रः ]

**त्रिष्टुबस्य च्छन्दः । अज्ञातदेवतानां पशूनां वपाहोमे विनियोगः । जातवेदो देवता ।**

**हे जातवेदः अनया वपया हूयमानया देवान् गच्छ अज्ञातदेवेभ्य एनां प्रापयेत्यर्थः । हि यस्माद्भवान् देवानां होता आह्वाता हविःप्रदाता वा प्रथमः अग्रगो बभूव भूतवान् । किञ्च सत्या स्मार्तेऽपि कर्मणि श्रौतफलसम्पादिनी अथवा सत्या अजातकेशकीटादिदोषदूषिता वपा हव्यद्रव्यं प्रगृहीता त्वया मे मम अस्तु भवतु । किञ्च यदिदम् अहं धर्म्यं[1] करोमि तत्त्वत्प्रसादात् समृध्यताम् सम्यक् फलवद्भवतु ॥१९॥**

जातवेदो वपयेति वपाहोमे विनियुक्तः [ खा गृ ३. ४. २७ द्रः ] ।

जातवेद इत्यस्य त्रिष्टुप् छन्दो जातवेदा देवता ।

हे जातवेदः पूर्वोक्तलक्षणाग्ने त्वं वपया वपारूपेण हविषा सह देवान् गच्छ प्राप्नुहि । त्वं खलु देवानां मखे[2] प्रथमः[3] प्रथमभावी मुख्यो होता बभूव बभूविथ । मध्यमस्थाने व्यत्ययेन प्रथमः । अग्निर्देवानां होतेति[4] श्रुतेरस्य होतृत्वम् । किञ्च मे मत्संबन्धिनी प्रगृहीता[5] होमार्थं [6]प्रकर्षेण धारिता[6] वपा सत्यास्तु देवैः स्वीकृता भवतु । न हि देवार्थं त्यक्तं हविर्देवप्राप्तिमन्तरेण सत्यं भवति । मे मदीयमिदं कर्म समृध्यतां सम्यग् वर्धताम् । यदिदं वपाप्रापणरूपमाशासनमस्ति[7] तदग्निः करोतु ॥१९॥

1 A धर्मे ; B धर्मं
2 M¹ & M² मध्ये
3 D² omits it.
4 *Ait. Br.* 1. 28; 3. 14
5 Mss. प्रतिगृहीता
6 D² प्रसारिता ; G प्रघातो ; M¹ & M² प्रकर्षेण धारिता
7 D² ०माशास्यमस्ति

**ऋणे प्रज्ञायमाने गोलकानां मध्यमपर्णेन जुहुयात् [गो गृ ४. ४. २६]**

यत् कुसीदमप्रदत्तं मयेह येन यमस्य निधिना चराणि।
इदं तदग्ने अनृणो भवामि जीवन्नेव प्रति तत्ते ददानि ॥२०॥

[ तै स ३. ३. ८. १ द्रः । तै आ २. ३. २—प्रति तत्ते दधामि ;
मा श्रौ २. ५. ५. १८—प्रति दत्ते ददामि । गो गृ ४. ४. २६ द्रः ]

**त्रिष्टुबस्य च्छन्दः । कुसीदविषये विनियोगः । अग्निर्देवता ।**

**यत् कुसीदमृणं मयेह लोके कुतश्चिद् गृहीत्वा तस्य न प्रतिदत्तं येन कुसीदेन यमस्य धर्मराजस्य निधिना कोशभूतेनाहं चराणि संव्यवहराणि हे अग्ने इदं तत् द्रव्यं ते तुभ्यं प्रतिददानि समर्पयाणि । किमर्थम्—येन दत्तेन ते तव जीवन्नेवाहमस्मिन्नेव जन्मनि अनृणो भवामि देहपातोत्तरकालं तव ग्राह्यो न भवामीत्यर्थः ॥२०॥**

यत्कुसीदमित्यनेन [1]स्वद्रव्यत्यागलक्षणानां कालात्यये प्रायश्चित्तं जुहुयान्मन्त्रलिङ्गात् । [2]केचनापाकरणीयस्यर्णस्यानपाकरणे प्रायश्चित्तार्थमिति ब्रुवते ।

यत् कुसीदमिति । [3]त्रिष्टुबस्य च्छन्दः । अग्निर्देवता[3] ।

हे अग्ने यत्कुसीदं ऋणतुल्यमवश्यं प्रदेयमप्रदत्तं मयेह जन्मनि । येन कुसीदेन[4] प्रदत्तेन निधिना निधितुल्येन[5] यमस्य सदने [6]यथेष्टं चराणि । [7]इदमेवाज्यं तत्स्थानीयं तत्कार्यकरमित्यर्थः । अतो जीवन्नेवाहं ते तुभ्यं तत्प्रदेयं[7] प्रति [8]तत्समाधानाय ददामि । अप्रदत्तकुसीदस्थानीयस्य [9]विहिताकरणस्येदमाज्यप्रदानं कुसीदप्रदानम् । अनृणः । तेनाहमिह जन्मन्येवानृणो भवामीत्यर्थः । स्वाहा इदमाज्यं सुहुतमस्तु ॥२०॥

1 M¹ & M² omit स्व.
2 Gun's explanation fits in well with this reference.
3 D² & G do not give छन्दः and देवता of the Mantra.
4 D² & G omit कुसीदेन.
5 D² & G omit निधितुल्येन.
6 D² & G omit it. M² अवश्यं
7 D² & G तत्प्रदेयमिदमाज्यं तद्देयं
8 M¹ & M² omit तत्.
9 D² विहितकरणीयस्ये० G विहिताकरणीयस्ये०

एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् ।
तेन देवा असहन्त शत्रून् हन्तासुराणामभवच्छचीभिः ॥२१॥

[ अ स ३. १०. १२ द्र: । पा गृ ३. ३. ५—तेन दस्यूनसहन्त देवाः ।
गो गृ ४. ४. ३३ ; खा गृ ३. ५. ३८ द्र: ]

त्रिष्टुबस्य च्छन्दः । इन्द्राणी देवता । स्थालीपाकहोमे विनियोगः ।

एकाष्टका या वर्षासु सा तप्यमाना खिद्यमाना तपसा शास्त्रोक्तेन विधिना इन्द्रं परमैश्वर्ययुक्तं गर्भं महिमानं महान्तमप्रतिरथं जजान जनितवती । तेन च देवा इन्द्रादयः शत्रून् प्रतिपक्षान् असहन्त पराजितवन्तः । योऽसुराणां वृत्रादीनां शचीभिरद्भुतकर्मभिः हन्ता हिंसिता अभवत् भूतवान् । शचीति कर्मनामगणे पठ्यते[1] ॥२१॥

इति भट्ट-गुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये
द्वितीयप्रपाठके तृतीयः खण्डः ॥

इन्द्राण्याः स्थालीपाकस्यैकाष्टकेति जुहुयात् [ खा गृ ३. ५. ३८ ] ।

एकाष्टका तपसेति । त्रिष्टुबस्य च्छन्दः । इन्द्राणी देवता ।

एकाष्टका संवत्सराभिमानिदेवस्य पत्नीरूपा देवमाता[2] तपसा पुत्रोत्पादनसाधनेन क्लेशसहनरूपेण तप्यमाना क्लिश्यमाना महिमानं माहात्म्ययुक्तमिन्द्रं [3]गर्भं जजान । इन्द्राख्यं गर्भमुदपादयत् । तेनेन्द्रेण देवा अग्न्यादयः शत्रून् [4]स्वशातयितॄनसुरादीनसहन्ताभ्यभावयन् । स चेन्द्रः शचीभिः स्वशक्तिभिः कर्मभिर्वासुराणां हन्ता [5]घातुकोऽभवत् ॥२१॥

॥*॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणमन्त्रपर्वणि
द्वितीये प्रपाठके तृतीयः खण्डः ॥*॥

---

1 *Nigh.* II. 1. 22
2 B[1], D[2] & G omit देवमाता.
3 D[2] omits गर्भं.
4 D[2] स्वनाशयितॄन॰
5 B[1] बाधको॰ ; D[2] & G घातको॰

## द्वितीयप्रपाठके चतुर्थः खण्डः

इदं भूमेर्भजामह इदं भद्रं सुमङ्गलम्।
परा सपत्नान् बाधस्वान्येषां विन्दते वसु[1] ॥१॥

[ गो गृ ४. ५. ३ ; खा गृ १. २. ७ द्र:। जै गृ १. १ ]

वस्वन्तं रात्रौ धनमिति दिवा [गो गृ ४. ५. ४]। परमेष्ठिन आर्षम्। अनुष्टुबस्य च्छन्दः। भूमिजपे विनियोगः। अग्निर्देवता।

अग्निः प्रार्थ्यते। हे अग्ने यदेतत् भूमेः सम्बन्धि स्थण्डिलं भवताधिष्ठितम् इदं भजामहे—भज सेवायाम्—सेवामहे गृह्णीम इति यावत्। किम्भूतमिदम्—भद्रं कल्याणकरम् इदं सुमङ्गलं सुष्ठु मङ्गलं प्रशस्तं समस्थलमित्यर्थः। इदमिति पृथगुच्चारणमादरार्थम्। किञ्च हे अग्ने सपत्नान् शत्रून्। अस्माकमित्यनुक्तमपि गम्यते। पराबाधस्व सुष्ठु पीडय। किञ्च योऽप्यनेन मन्त्रेण रात्रौ वस्वन्तेन दिवा च धनान्तेन त्वदधिष्ठितं भूमेरवयवं गृह्णाति सोऽपि अन्येषाम् ईश्वराणां सम्बन्धि वसु धनं विन्दते—विद लाभे—लभते ॥१॥

अथ भूमिग्रहणमन्त्रः ॥ इदं भूमेरित्ययं सर्वसाधारणोऽग्निमुखतन्त्रे परिसमूहनानन्तरं भूस्पर्शनजपे विनियुक्तः। तथा च सूत्रम् [ खा गृ १. २. ७ ]—पश्चादग्नेर्भूमौ न्यञ्चौ पाणी कृत्वेदं भूमेरितीति ॥ अग्नेरनन्तरमेव पश्चात्तृणादिभिः सहितौ भूमिगताववाञ्चौ हस्तौ कृत्वेदं भूमेरिति जपेदित्यर्थः[2]।

इदं भूमेर्भजामह इति। अनुष्टुबस्य च्छन्दः। अग्निर्देवता।

अग्निः प्रार्थ्यते। हे अग्ने यदिदं भूमेः भूसंबन्धि स्थलं भवताधिष्ठितमिदं भजामहे सेवामहे[3] गृह्णीम इति यावत्। किम्भूतमिदम्—भद्रं कल्याणकरम्। इदं सुमङ्गलं सुष्ठु

1 C records विन्दते धनम् as the alternative reading [ to be adopted at day-time ].

2 See Rudra on *Kh. Gṛ.*

3 B[1], D[2] & G omit सेवामहे.

प्रशस्तम् । [1]स्थण्डिलमित्यर्थः । इदमिति[2] पृथगभिधानमादरार्थम् । किञ्च हे अग्ने सपत्नान् शत्रूनस्मत्संबन्धान् पराबाधस्व [3]संपीडय । किञ्च हे अग्ने त्वदधिष्ठितं [4]भूमेः पश्चाद्भागं यो गृह्णाति सोऽप्यन्येषामीश्वराणां सम्बन्धि वसु धनं विन्दते लभते[5] । अत्रान्त्ययोः पदयोरेकार्थत्वात्प्रयोगभेदेन पाठो गृह्ये व्यवस्थितः । वस्वन्तं रात्राविति [ खा गृ १. २. ८ ] सूत्र उक्तत्वाद्रात्रौ विवाहादिहोमप्रयोगे वस्विति पदं ब्रूयाद्दिवा धनमिति व्यवस्थावगन्तव्या ॥१॥

[ इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा
वयन्तव ॥१(क)॥

[ ऋ स १. ६४. १ ; अ स २०. १३. ३ ; सा स २. ४१४ ; हि गृ १. ६. ४ ; आप म २. ७. १ । गो गृ ४. ५. ५ ; खा गृ १. २. ६ द्रः ]

भरामेध्मं कृणवामा हवींषि ते चितयन्तः पर्वणापर्वणा वयम् ।
जीवातवे प्रतरां साधया धियोऽग्ने सख्ये मा रिषामा
वयन्तव ॥१(ख)॥

[ ऋ सं १. ६४. ४—प्रतरं ; सा स २. ४१५ । गो गृ ४. ५. ५ ; खा गृ १. २. ६ द्रः ]

शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतम् ।
त्वमादित्याँ आवह तान् ह्युश्मस्यग्ने सख्ये मा रिषामा
वयन्तव ॥१(ग)॥

[ ऋ स १. ६४. ३ ; सा स २. ४१६ । गो गृ ४. ५. ५ ; खा गृ १. २. ६ द्रः ]

**अस्य तृचस्योत्तराख्यग्रन्थान्तरे[6] पठितस्य कर्मकालगतस्यार्थे दिङ्मात्रमुच्यते ।**

1 D² समस्थलमित्यर्थः ; G, M¹ & M² मंगलमित्यर्थः
2 M¹ & M² omit इदमिति.
3 D² पीडय
4 D² & G अग्नेः
5 D² & G omit लभते.
6 B ०स्योत्तरार्षग्रन्थान्तरे. See *Sāma-veda*, (Uttarārcika) 2. 414-16.

अनेन जागतेन तृचेन कुत्स ऋषिरग्निमस्तौत्। पृष्ठ्यस्य षडहस्य षष्ठेऽहन्याग्निमारुते शस्त्रे विनियोगः परिसमूहने च। तथा च गृह्यम् [गो गृ ४. ५. ५]—इमं स्तोममिति तृचेन परिसमूहेत्।

इमं स्तोमं वयं सम्महेम—मह पूजायाम्—सम्यक् पूजोपकरणयुक्तं कुर्याम। जातवेदसे जातविद्यो वा जातधनो वा जातप्रज्ञो वा जातवेदाः तस्मै। किम्भूताय—अर्हते स्तुतियोग्याय। कया—मनीषया प्रज्ञया। रथमिव सारथिः। हि यस्मात् नः अस्माकम् अस्य अग्नेः सकाशात् प्रसादाद्वा भद्रा कल्याणी सुखा वा प्रमतिः प्रकृष्टा बुद्धिः संसदि जनसमाजे जायते यया वयमपि स्तोतुं जानीमः तस्मात् हे अग्ने यस्त्वमेवम्भूतस्तस्य तव सख्ये मित्रत्वे वयं केनचिद्दुरात्मना मा रिषाम मा हिंसिष्महि इत्येतदाशास्यते। सम्महेमेति मा रिषामेति चाष्टमस्य मकारस्य मकारवकारयोर्लघ्वोः परत एकादशिद्वादशिनोर्लघावष्टममक्षरमिति शौनकवचनाद्दीर्घत्वम्[1]। पाणिनेस्तु अन्येषामपि दृश्यत इति [पा ६. ३. १३७] ॥१(क)॥

हे अग्ने त्वदर्थम् इध्मम्। अग्निसमिन्धनार्थं काष्ठमिध्म उच्यते तमिध्मं भराम आहराम। हृग्रहोर्भश्छन्दसीति [पा वा ८. २. ३२] हरतेर्हकारस्य भकारः। हवींषि चर्वादीनि पर्वणा पर्वणा पर्वणि पर्वणि चितयन्त उपपादयन्तः वयं ते तव कृणवाम सम्पादयाम निर्वपामेति यावत्। पर्व अमावास्यापौर्णमास्यौ तथा च स्मृतिः[2]—अमावास्यायाममावास्येन पौर्णमासेनेति। किमर्थम्—प्रतराम् अतिशयेन प्रकृष्टं सुदीर्घकालं जीवातवे जीवनाय। तुमर्थे से-सेनिति [ पा ३. ४. ९ ] जीवतेस्तवेन्प्रत्ययः। किञ्च हे अग्ने। साधय धियः। धीरिति कर्मनामगणे पठ्यते[3]। तेनैवमुक्तं भवति—अस्मत्क्रियमाणानि कर्माणि साधय निष्पादय सफलानि कुर्वित्यर्थः। साधयेति यकारस्याधिकारे लघौ परतो दशमं चैतयोरेवमिति शौनकवचनाद्दीर्घत्वम्[4]। कृणवामेति मकाराकारस्य हकारे लघौ परतः पूर्ववद्दीर्घत्वम् ॥१(ख)॥

हे भगवन्नग्ने त्वं धियः कर्माणि बुद्धीर्वा साधय त्वदाराधानयोग्या निष्पादय। येन त्वा त्वां समिधं समिद्धं वयं परिचरितुं शकेम इत्येत-

1. *Ṛgveda Prātiśākhya* 8. 21
2 *Āp. Yajñaparibhāṣā* 63, 64
3 *Nigh*. II. 1. 21
4 *Ṛv. Prā*. 8. 22

दाशास्महे। त्वे त्वयि हविर्हव्यम् आहुतं दत्तं देवा इन्द्रादयः अदन्ति भक्षयन्ति त्वन्मुखत्वात्तेषाम्। किञ्च त्वम् आदित्यान् आवह। अदितेरपत्यान्यादित्याः सर्वे देवा उच्यन्ते तानादित्यानिन्द्रादीन् हे अग्ने आवह आह्वय। हि यस्मात् तानादित्यान् वयम् उश्मसि—वश कान्तौ—कामयामहे उद्देश्यत्वेनेच्छाम इत्यर्थः। अग्ने सख्ये मा रिषामा वयं तवेति सर्वत्र तुल्योऽर्थः।

आदित्याँ इत्यत्र आदित्यानित्यस्य नकार आकारोपधः पद्यान्तोऽपि स्वरोदयः। लुप्यते[1] इत्यनेन लोपे कृते नकारस्य लोपरेफोष्मभावे पूर्वस्तत्स्थानादनुनासिकः स्वरः[2] इत्यनेनाकारस्यानुनासिकः। तत्स्थानान्नकारस्थानाल्लोपात् पूर्वः स्वरोऽनुनासिकस्वरो वेदितव्य इत्यर्थः। साधयेति मा रिषामेति च पूर्ववद्दीर्घत्वम् ॥१(ग)॥

पवित्रे स्थो वैष्णव्यौ ॥१(घ)॥

[ वा स १. १२ ; शा गृ १.८. १४ ; गो गृ १. ७. २२ ; खा गृ १. २. १२ ]

यजुरिदं वक्ष्यमाणाज्यसंस्कारे विनियुक्तम्। पवित्रे देवते।

पुङः अर्तिलूधू [पा ३. २. १८४] इत्यत इत्र इत्यनुवर्तमाने पुवः संज्ञायामिति [पा ३. २. १८५] इत्रप्रत्ययान्तः प्रथमाद्विवचनान्तश्च पवित्रशब्दः। हे पवित्रे युवां वैष्णव्यौ विष्णुदेवताके—विष्णुर्वै यज्ञः[3]—यज्ञिये यज्ञार्हे स्थः भवथः ॥१(घ)॥

विष्णोर्मनसा पूते स्थः ॥१(ङ)॥

[ मै स ४. १. ६ ; काठ स १, ५ ; ३१. ४ ; गो गृ १. ७. २३ ;
खा गृ १. २. १३ ]

निगदव्याख्यातः ॥१(ङ)॥

देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः स्वाहा ॥१(च)॥

[ तै स १. २. १. २—सविता पुनातु ; गो गृ १. ७. २५ ; खा गृ १. २. १४ ]

अत्राज्यं देवता। आज्योत्पवने विनियोगः।

1 *Ṛv. Prā.* 4. 26
2 *Ṛv. Prā.* 4. 35
3 *Ait. Br.* 1. 15

हे आज्य देवः दानादिगुणयुक्तः सविता अनेन आभ्यां पवित्रेण पवित्राभ्याम् वायुपूताभ्याम्[1] अच्छिद्रेण अच्छिन्नाभ्यामव्यवच्छिन्नाभ्यां करण-भूताभ्यां त्वा त्वाम् उत्पुनातु उद्धवत्[2] पवित्रीकरोतु अज्ञातकीटकेशादिसङ्ग-दोषमवस्फोटयत्वित्यर्थः। किञ्च वसु तेजः[3] [4]तत्प्रधानत्वाद्वसुः सूर्यः। तस्य वसोः सूर्यस्य रश्मिभिः किरणैः त्वामुत्पुनात्विति सम्बन्धः। यावदभिधानाभिप्रायेण सवितुरन्यः सूर्यः। एतेन सवितृशब्देन विष्णुरुच्यते। पवित्रेणेति व्यत्ययेनैकवचनम्। स्वाहेति मन्त्रशेषः। अस्यापि मन्त्रत्रयस्य शाखान्तराम्नातस्य[5] कर्मसमाधानार्थमुपन्यासः ॥१(च)॥ ][6]

तपश्च तेजश्च श्रद्धा च ह्रीश्च सत्यञ्चाक्रोधश्च त्यागश्च धृतिश्च धर्मश्च सत्त्वञ्च वाक् च मनश्चात्मा च ब्रह्म च तानि प्रपद्ये तानि मामवन्तु भूर्भुवः स्वरों महान्तमात्मानं प्रपद्ये ॥२॥

[ गो गृ ४. ५. ८ ; खा गृ १. २. २२ ; जै गृ १. २ द्रः ]

निगदोऽयम्। मन्त्रजपे विनियोगः। रुद्ररूपोऽग्निर्देवता। परमेष्ठिन आर्षम्।

तपः उपवासादि। तेजः प्रकाशात्मकं तमोभिभवि। श्रद्धा चित्तस्य कालुष्यापनोदी धर्मः। ह्रीः लज्जा। सत्यं यथार्थवादित्वम्। अक्रोधः प्रतिकूलविषय-

1 B इवायुभूताभ्यां, I वायुभूताभ्यां
2 B ऊर्ध्वं
3 B, I & M[1] धनं
4 B तत्प्रदानहेतुत्वाद्
5 B मन्त्रानुसन्धानार्थं०
6 The six Mantras १(क)—१(च) do not form part of the *Ch. Br.*, and they have not been commented upon by Sāyaṇa. The last three Mantras seem to have been taken by Guṇ from another work viz. the Uttarārcika portion of the *Sāmaveda*, as he himself says: अस्य तृचस्योत्तराख्यग्रन्थान्तरे पठितस्य. See Guṇ's *Bhāṣya* on 2. 4. 1 ( ka ). Guṇ's commentary has however found place in some of the Sāyaṇa mss., e.g. M[1]. D[2] has inserted explanations of three Mantras १(क)-१(ग), which agree verbatim with the text of Guṇ's *Bhāṣya*.

योगेऽपि मनसोऽविकारित्वम् । त्यागः न्यायार्जितस्य धनस्य विधिना विसर्गः । धृतिः सौमनस्यम् । धर्मः यज्ञकर्म । सत्त्वं लघुप्रकाशात्मको गुणः । वाक् वचनविषयमिन्द्रियम् । मनः हृत्प्रतिष्ठितम् । आत्मा क्षेत्रज्ञः । ब्रह्म परं तत्त्वम् । सर्वे चकारा अनुक्तसमुच्चयार्थाः । तानि तपःप्रभृतीनि अहं प्रपद्ये शरणं गच्छामि । तानि तपःप्रभृतीनि ब्रह्मपर्यन्तानि इदं कर्म कुर्वन्तं माम् अवन्तु रक्षन्तु । भूः पृथिवी भुवः अन्तरिक्षम् स्वः द्यौः ओम्[1] आत्मा । [2]एते यदात्मानः तं[2] महान्तम् अनन्तम् आत्मानं रुद्राग्निरूपं प्रपद्ये प्रपन्नोऽस्मि ॥२॥

विरूपाक्षोऽसि दन्ताञ्जिस्तस्य ते शय्या पर्णे गृहा अन्तरिक्षे विमितं हिरण्मयम् । तद्देवानां हृदयान्ययस्मये कुम्भेऽन्तः-सन्निहितानि । तानि बलभृच्च बलसाच्च रक्षतोऽप्रमणी अनि-मिषतः सत्यम् । यत्ते द्वादश पुत्रास्ते त्वा संवत्सरे संवत्सरे कामप्रेण यज्ञेन याजयित्वा पुनर्ब्रह्मचर्यमुपयन्ति । त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु । ब्राह्मणो वै ब्राह्मणमुप धावत्युप त्वा धावामि । जपन्तं मा मा प्रति जापीर्जुह्वन्तं मा मा प्रति हौषीः कुर्वन्तं मा मा प्रति कार्षीः । त्वां प्रपद्ये । त्वया प्रसूत इदं कर्म करिष्यामि । तन्मे राध्यतां तन्मे समृध्यतां तन्न उप पद्यताम् । समुद्रो मा विश्वव्यचा ब्रह्माऽनु जानातु तुथो मा विश्ववेदा ब्रह्मणः पुत्रोऽनु जानातु श्वात्रो मा प्रचेता मैत्रावरुणोऽनु जानातु । तस्मै विरूपाक्षाय दन्ताञ्जये समुद्राय विश्वव्यचसे तुथाय विश्ववेदसे श्वात्राय प्रचेतसे सहस्राक्षाय ब्रह्मणः पुत्राय नमः ॥३॥

[ गो गृ ४. ५. ८ ; खा गृ १. २. २२ ; जै गृ १. २ द्र: ]

1 B adds ओँ ब्रह्म.

2 B एतानि प्रतियन्तु सत् कर्मणा तदर्थ्या

विरूपाक्षः नानाप्रकारनेत्रः असि भवसि। तथा च स्मरणम्[1]—

सर्वतः पाणिपादान्तः सर्वतोऽक्षिशिरोमुखः।
विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु ॥

इति[2]। दन्ताञ्जिः दन्ताननक्ति व्यञ्जयतीति औणादिक इः [उ ५७९]—अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु—व्यक्तदन्त इत्यर्थः। तस्य एवम्भूतस्य ते तव शय्या शयनमवस्थानं पर्णे उपलेपनोल्लेखनाभ्युक्षणैः संस्कृते स्थण्डिले। भूमौ स्थानमग्नेरिति वचनात्। तथा गृहा गृहम् अन्तरिक्षे भुवर्लोके विमितं निर्मितं हिरण्यगर्भप्रभृतिभिः। कीदृशं तद् गृहम्—हिरण्मयं सुवर्णमयम्। तथा च पश्यामो हि वयम्—ज्वलितमग्निं प्रविशन्तमन्तरिक्षम्। तत् तस्मिन् गृहे देवानाम् इन्द्रादीनां हृदयानि। तिष्ठन्तीति वाक्यशेषः। तैर्देवहृदयैः सहैकस्थितोऽग्निः प्रार्थ्यते—हे अग्ने कदा पुनस्त्वमस्माकं हविरानयिष्यसीति अग्निमुखत्वाद्देवानाम्। कस्मिन्निव—अयस्मये लौहमये कुम्भे घटे इव। अन्तः मध्ये अग्नौ सन्निहितानि एकीभूतानि तानि देवहृदयानि बलभृच्च बलम् उपचयं बिभर्ति पुष्णातीति बलभृत् आत्मभक्तानाम्। तथा[3] बलं सादयति अवसादयति स्फोटयति विपक्षाणामिति बलसात्। अग्नेः प्रतीहारावेतौ। रक्षतः प्रतिपालयतः। किम्भूतौ—अप्रमणी अप्रमादिनौ। पुनः किम्भूतौ—अनिमिषतः[4] अक्षिणी न निमीलयतः। किं तौ रक्षतः—तत् सत्यम् अग्निम्। ताभ्यां हि रक्षितेऽग्नौ यजमानः श्रद्धावान् पत्नीसहितः पशुपुरोडाशादि जुहोति। यत् ये ते तव संवत्सराख्यस्य यज्ञस्य द्वादश पुत्राः अग्न्याख्याः[5]। ते हि देवर्त्विजो ज्योतिष्टोमादिषु यागेषु मनुष्यर्त्विजां ब्रह्मादीनां पुरतो धिष्ण्येषु स्थानेषु स्थाप्यन्ते। त्वा त्वां संवत्सरे संवत्सरे कामप्रेण स्वेच्छासम्पादकेन यज्ञेन ज्योतिष्टोमादिना यजमानं याजयित्वा यज्ञं कारयित्वा पुनः ब्रह्मचर्यम् उपयन्ति ब्रह्मणि उपायान्ति प्रविशन्ति। श्रूयते च यथा—संवत्सरे संवत्सरे ज्योतिषा यज्ञेनेति। हे अग्ने त्वं देवेषु देवलोके ब्राह्मणः अर्घार्हः अहं मनुष्येषु मनुष्यलोके ब्राह्मणः वै यतः ब्राह्मणमुपधावति ब्राह्मणं सेवते। अतः त्वा त्वाम् अहम् उपधावामि परिचरामि। उपधावनस्य कारणमाह—जपन्तं मा

1 *Gṛhyāsaṃgraha* 1. 69
2 B इत्यतो विरूपाक्षोऽसि
3 A यथा
4 A अनिमिषत्
5 For the various names of Agni see *Tāṇḍya Br.* 1. 4. 2-14.

मा प्रतिजापीः जुह्वन्तं मा मा प्रतिहौषीः। जुह्वन्तमिति छान्दसो नुम्। कुर्वन्तं मा मा प्रतिकार्षीः। एतदुक्तं भवति—जपहोमकर्मकाले मम त्वं प्रातिकूल्यं मा गाः। यतः त्वाम् अहं प्रपद्ये प्रपन्नोऽस्मि। त्वया प्रसूतः अनुज्ञातः इदं प्रस्तुतं कर्म करिष्यामि। तत् कर्म मे मम त्वत्प्रसादात् राध्यताम् संसिध्यताम्। तत् मे समृध्यताम् संवर्धतां सम्पूर्णं भवत्वित्यर्थः। तत् मे उपपद्यताम् फलप्रदानसमर्थं भवत्वित्यर्थः। यत्ते द्वादशाग्नयः पुत्रा इत्युक्तं तान् हि नामप्रयोगेण[1] कतिचिद्दर्शयितुमाह—समुद्र इव समुद्रः। विश्वं सर्वत्र विविधमञ्चति गच्छतीति विश्वव्यचाः पदार्थाध्यक्षः। ब्रह्म नामाग्निः तथा तुथः अग्निः विश्ववेदाः सर्वस्य वेदिता तथा ब्रह्मणः पुत्रः तथा श्वात्रः अग्निः तथा प्रचेताः प्रकृष्टचित्तः अग्निः मैत्रावरुणः अस्मिन् कर्मणि प्रवृत्तं मा माम् अनुजानातु अनुज्ञां ददात्वित्यर्थः। हे अग्ने यस्त्वमनेकप्रकार उपवर्णितः तस्मै तुभ्यं विरूपाक्षाय दन्ताञ्जये तथा समुद्राय विश्वव्यचसे तथा तुथाय विश्ववेदसे श्वात्राय प्रचेतसे सहस्राक्षायानेकशक्तये ब्रह्मणः ब्रह्मयोनेः पुत्राय नमः तुभ्यमिदं हविरस्तु ॥३॥

अथ प्रपदमन्त्रः ॥ तपश्चेत्यादिना ब्रह्मणः पुत्राय नम इत्यन्तेन प्रपदसंज्ञकेन मन्त्रेण सर्वहोमसाधारणेध्माधानानन्तरं [2]जप उच्यते। तथा च सूत्रितम्[2] [ खा गृ १. २. २२ ]—प्रपदं जपित्वोपताम्य कल्याणं ध्यायन् वैरूपाक्षमारभ्योच्छ्वसेदिति ॥ निरुच्छ्वासो भूत्वा[3] प्रपदं जपन् भूर्भुवः स्वरोमित्योङ्कारे[4] परमात्मज्ञानं मे भूयादिति ध्यायन् यथासामर्थ्यमोङ्कारं प्लावयित्वा विरूपाक्षोऽसि दन्ताञ्जिरित्युच्छ्वसेदित्यर्थः[5]। तथा चार्धमासव्रती पौर्णमास्यामित्युपक्रम्यारण्ये प्रपदं जपेत् [ खा गृ ४. १. ५–७ ] इत्यादिनोक्ताः काम्या विनियोगा द्रष्टव्याः।

पाठस्तु—तपश्चेति विरूपाक्षोऽसीति च। यजुर्निगदरूपोऽयं मन्त्रो रुद्ररूपाग्निदेवताकः।

तपः पयोव्रतादिजन्यम्। तेजः शरीरकान्तिः। श्रद्धा कर्मस्वास्तिकता। ह्रीरननुष्ठानजनिता लज्जा। सत्यं यथार्थवचनम्[6]। अक्रोधः क्रोधनिमित्तेषूपेक्षा। त्यागो यज्ञादौ दक्षिणादिरूपेण धनप्रदानम्। धृतिर्विकारनिमित्ते सत्यपि मनसश्चाञ्चल्याभावः। धर्मो

1 Names are found in *Tāṇḍya Br.*
2 B[1], M[1] & M[2] जपेत्। सूत्रितं च
3 D[2] & G omit भूत्वा.
4 M[2] ०त्योङ्कारेण
5 See Rudra on *Kh. Gr.* 1. 2. 22
6 D[2] & G ०वदनम्

वेदोक्तोऽभ्युदयनिःश्रेयससाधनः[1]। सत्त्वं कर्मानुष्ठानेषु सात्त्विकताबुद्धिः[2]। वाक् सर्वस्य प्रकाशिका अभिवदनसाधनमिन्द्रियमभिवादो वा। मनो मननसाधनमान्तरमिन्द्रियम्। आत्मा कर्ता क्षेत्रज्ञः। ब्रह्म [3]निरस्तोपाधिकमात्मचैतन्यम्। तानि तप आदीनि प्रपद्ये शरणं प्रविष्टोऽस्मि। यः कश्चित् यत् यत् किंचित् कर्म करोति तस्य तप आद्यपेक्षितमेव। अतस्तेषामित्थं प्रार्थनमुचितम्। तानि मामनुष्ठातारमवन्तु। भूर्भुवः स्वरिति पृथिव्यादित्रयो लोकाः। तान्नमस्यामीति[4] शेषः। ओमिति प्रणवाधिष्ठानं ब्रह्म। तद्ध्यायामीत्यर्थः। किञ्च महान्तमात्मानं रुद्ररूपं माहात्म्योपेतं सर्वेषामात्मभूतमग्निं प्रपद्ये प्राप्नोमि[5]।

हे रुद्ररूपाग्ने त्वं विरूपाक्षोऽसि नानारूपबह्वक्षियुक्तो भवसि। तथा च स्मृतिः[6]

सर्वतः पाणिपादश्च सर्वतोऽक्षिशिरोमुखः।
विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु ॥

इति। तथा दन्ताञ्जिः। अञ्जू व्यक्तिश्लक्षणकान्तिगतिषु। दन्तैरनक्ति प्रकाशयतीति दन्ताञ्जिः। दीप्रदन्त इत्यर्थः। तथाविधो भवसि। तस्य तादृशस्य ते शय्या शयनाश्रयः पर्णे पर्णवदास्तृतायां भूम्यामित्यर्थः[7]। भूमौ ह्यग्निर्निहितः। तथा ते[8] गृहा गृहमन्तरिक्षे हिरण्मयं हिरण्यमयं विमितं विनिमितम्। भूम्यां निहितो ज्वालाभिरन्तरिक्षे संचरति। यद्वा [9]वैद्युतरूपेणान्तरिक्षे संचरति। तत्तस्मिन्नयस्मये कुम्भे। अय इति सुवर्णनाम[10]। सुवर्णकुम्भसदृशोऽग्नौ। अन्तस्तन्मध्ये देवानां हृदयान्यभिप्रायविशेषरूपाणि[11] संनिहितानि सम्यक् स्थापितानि। तेषां हविर्लक्षणस्यान्नस्याग्न्याधानत्वात्[12] तत्र[13] हृदयनिधानमुचितम्। तानि हृदयानि। बलभृच्च बलसाच्चैतन्नामकावुभावप्यग्नेर्द्वारपालौ[14]। अप्रमणी अनन्यमनस्कौ। अनिमिषतो निमेषरहितौ रक्षतः पालयतः। सत्यमेवमेव तत्। किञ्च हे रुद्ररूपाग्ने। यद् ये। वचनलिङ्गयोर्व्यत्ययः। ते तव द्वादश पुत्रा द्वादशसङ्ख्याका धिष्ण्याहवनीयाद्य-

1 $D^2$ वेदोक्ताभ्युदयस्य निःश्रेयससाधनं
2 $D^2$ omits बुद्धिः.
3 $D^2$ & G नितरामुपस्थानौपयिक०
4 $D^2$ नमस्य इति ; G नमस्यत इति
5 $B^1$, G & $M^1$ प्राप्तोऽस्मि
6 *Gṛhyāsaṃgraha* 1. 69
7 $D^2$ & G भूम्यामासीदित्यर्थः
8 $D^2$ & G omit ते.
9 $D^2$ विद्युद्रूपेण०
10 $D^2$ सुवर्णम्. See *Nigh*. I. 2. 4.
11 $D^2$ & G ०विशेषाणि
12 $B^1$ ०स्यान्नाधोनत्वात् ; $D^2$ ०स्यान्नस्याग्न्याधीनत्वात् ; ०G स्याग्न्यधीनत्वात्
13 $D^2$ & G तद्
14 $M^1$ & $M^2$ add देवौ.

भिमानिनो वक्ष्यमाणाः समुद्रादिसंज्ञकाः[1] सन्ति। ते त्वा त्वां प्रीणयितुं संवत्सरे संवत्सरे सर्वेषु संवत्सरेषु यजमानं कामप्रेण कामपूरकेण[2] ज्योतिष्टोमादिना याजयित्वा यागं कारयित्वा पुनर्ब्रह्मचर्यमुपयन्ति। यज्ञीयाद्रूपाद्विमुक्ता भवन्तीत्यर्थः। संवत्सरे संवत्सरे सोमयागेन[3] वसन्ते वसन्ते ज्योतिषा[4] यजेतेति श्रुतिः। अप्रवृत्ते कर्मणि लौकिकः संपद्यत इति[5] सूचितत्वात्तेषां यज्ञसाधनतामुपेक्ष्य पुनर्ब्रह्मचर्यावाप्तिरुपचर्यते। यतस्तव पुत्रा ईदृशा अत एव महानुभावस्त्वमित्यर्थः। किञ्च हे अग्ने त्वं देवेषु मध्ये ब्राह्मणोऽसि। अस्ति[6] देवेष्वपि ब्राह्मणादिवर्णव्यपदेशः। ब्रह्म वै बृहस्पतिरिति ब्राह्मणम्[7]। बृहदारण्यकेऽपि[8] यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोम इत्यादि। तथाहं मनुष्येषु ब्राह्मणजातिः। लोके ब्राह्मणो वै ब्राह्मणमुपधावतीति प्रसिद्धिद्योतनार्थं ब्राह्मणस्य ब्राह्मणो गतिरिति लौकिका वदन्ति। अतस्त्वामुपधावामि। किञ्च जपन्तं मा मां त्वं मा प्रतिजापीः। जपविघातं मा कुर्वित्यर्थः। एवमुत्तरत्रापि योज्यम्। जुह्वन्तं मा प्रतिहौषीः। छान्दसो नुम्। कुर्वन्तं दानं कुर्वन्तं मा प्रतिकार्षीः। [9]जपहोमदानेष्वनुकूलो भवेत्यर्थः। तदर्थं त्वां[10] प्रपद्ये प्रपन्नोऽस्मि। त्वया प्रसूतोऽनुज्ञातः सन्निदं क्रियमाणं कर्म करिष्यामि। तत् कर्म मे मह्यं समृध्यतां सम्यक् प्रवर्धताम्। तदेव कर्म मे ममोपपद्यतां फलोत्पत्तिं कुरुताम्। फलप्रदानसमर्थं भवत्वित्यर्थः। यस्मात्ते[11] द्वादशाग्नेः[12] पुत्रा इत्युक्तं तस्मान्नामप्रभेदं किञ्चिद्दर्शयितुमाह। समुद्रः फलानां समुद्धरणसाधन[13] एतन्नामकोऽग्निः। विश्वव्यचाः सर्वत्र व्याप्तः। ब्रह्मा परिवृढ एतन्नामकः सोऽग्निर्मामनुजानातु। तथा तुथ एतन्नामकः। विश्ववेदा विश्वस्य वेदिता। अथवा वेद इति[14] धननाम। विश्वधनः। ब्रह्मणः पुत्रोऽग्निर्मामनुजानातु। किञ्च श्वात्र आशु हविषामत्ता

1 These names are enumerated in *Tāṇḍya Br.* 1. 4. 2-14.

2 B¹ & G omit कामपूरकेण ; D² reads स्वेच्छया सम्पादकेन.

3 M¹ & M² ०यागो

4 D² ज्योतिष्टोमेन

5 *Āp. Śr.* 24. 4. 22

6 D² & G अतो

7 *Ait. Br.* 2. 38

8 *Bṛ. Up.* 1. 4. 11

9 B¹ यागदानहोमादिष्व० ; D² & G यागदानहोमेष्व० ; M¹ यागदानहोमदानेष्व० ; M² यागदानहोमदानेष्व०

10 B¹ adds शरणं ; M¹ adds त्वा ; M² adds त्वो.

11 D² यस्मादेते

12 G द्वादशाग्नयः

13 B¹ समुद्रवर्णनसाधन ; D² समुद्रवत्साधक

14 D² & G omit इति.

क्षिप्रगामी वैतन्नामकः। प्रचेताः प्रकृष्टमतिः। मैत्रावरुणः। मित्रोऽहरभिमानी देवो वरुणो रात्रेः। तयोः संबन्धिरूपोऽग्निर्मामनुजानातु। यद्वा प्रतिवाक्यं निर्दिश्यमानाः पृथक्[1] पृथगेवाग्नयोऽवगन्तव्याः। तस्मै विरूपाक्षाय दन्ताञ्जय उक्तरूपाय रुद्राख्यायाग्नये समुद्राय विश्वव्यचसे तुथाय विश्ववेदाय श्वात्राय प्रचेतसे सहस्राक्षाय देवाय ब्रह्मणः स्वयंभुवः पुत्रायाग्नये नमो नमस्करोमि ॥

तदेवं सर्वहोमसामान्याग्निमुखप्रभृत्यष्टकापर्यन्ता मन्त्रा व्याख्याताः ॥२, ३॥

[ अक्तं रिहाणा व्यन्तु वयः ॥३ (क) ॥

[ गो गृ १. ८. २७ । तै स १. १. १३. १ ; खा गृ २. १. २६—वियन्तु ]

**यजुरिदं दर्भतृणाभ्यञ्जने विनियुक्तम्। वयो देवताः।**

**वयः पक्षिणः इदं दर्भतृणम् अक्तं घृतेनाभ्यक्तं म्रक्षितं रिहाणाः आस्वादयन्तः व्यन्तु खादन्तु। रिहाणा इति लिह आस्वादन इत्यस्य वर्णव्यत्ययेन लकारस्य रेफः ॥३(क) ॥**

य: पशूनामधिपती रुद्रस्तन्तिचरो वृषा ।
पशूनस्माकं मा हिंसीरेतदस्तु हुतं तव स्वाहा ॥३ (ख) ॥

[ गो गृ १. ८. २८ ; खा गृ २. १. २६ ]

**अनुष्टुबियं रुद्रदेवताका दर्भजूटिकाहोमे विनियुक्ता।**

**यः पशूनां गवाश्वादीनाम् अधिपतिः स्वामी रुद्रः परेषां रोदयिता तन्तिचरः अन्तरिक्षस्थानगः बहुभक्षो वा वृषा वर्षिता पर्जन्यरूपः। परोक्षोऽपि भगवान् प्रत्यक्षीकृत्योच्यते—हे रुद्र स त्वं पशून् गवाश्वादीन् अस्माकं सम्बन्धिनो मा हिंसीः मा वधीः। एतत् हुतं दत्तं तव अस्तु भवतु। प्रीणनायेति शेषः।**

**एतन्मन्त्रद्वयमपठितमपि मन्त्रमध्ये आज्याहुतिस्थालीपाकादिहोमोपयुक्तमिति व्याख्यातम् ॥३(ख)॥ ][2]**

1 D² omits it.
2 Two Mantras ३(क) and ३(ख) are not found in *Ch. Br.* Sāyaṇa has not commented upon them.

**सहस्रबाहुर्गौपत्यः स पशूनभि रक्षतु ।**
**मयि पुष्टिं पुष्टिपतिर्दधातु मयि प्रजां प्रजापतिः स्वाहा ॥४॥**

[ गो गृ ४. ५. १८ ; खा गृ ४. १. १० द्र: ]

**बृहत्यस्य च्छन्दः । पशुस्वस्त्ययनकामस्य व्रीहियवहोमे विनियोगः । रुद्रपुत्रादयो देवताः ।**

**योऽनेकबाहुः सहस्रबाहुः गौपत्यः गोपतेः पशुपतेः पुत्रः पशून् गवादीन् यजमानसक्तान् अभिरक्षतु आभिमुख्येन पालयतु । मयि यजमाने पुष्टिं धनधान्यशरीरोपचयलक्षणम् पुष्टिपतिः देवो दधातु धारयतु पुष्णातु वा । प्रजापतिः च देवो मयि प्रजां पुत्रपौत्रादिलक्षणां दधातु । स्वाहेत्येकार्थं सर्वत्र ॥४॥**

अथ [1]काम्यहोमाङ्गभूतमन्त्रा व्याख्यायन्ते ॥

तत्र सहस्रबाहुरित्यनेन पशुस्वस्त्ययनकामो जुहुयात् । सूत्रितं च [ खा गृ ४. १. १० ]—गोष्ठे[2] उदगग्रेषु सहस्रबाहुरिति पशुस्वस्त्ययनकामो व्रीहियवौ जुहुयादिति ॥ पशूनां शोभनाविच्छेदकामो[3] व्रीहियवौ मिश्रीकृत्य त्रिः प्रक्षाल्य जुहुयादित्यर्थः ।

सहस्रबाहुर्गौपत्य इति । आस्तारपङ्क्तिरस्य च्छन्दः । रुद्रपुत्रादयो[4] देवताः ।

सहस्रबाहुर्योऽनेकबाहुः[5] । गौपत्यो रुद्रपुत्र इति हि श्रुतिषु मरुद्गणनिर्देशोऽस्ति । मरुतां हि पशुरक्षणं गोप्रस्थापनमन्त्रे ब्राह्मणे श्रुतम्[6]—वायवः स्थेत्याह । वायव एवैनान् परिददातीति ॥ नोऽस्माकं पशून् संचरस्थान्[7] अभिरक्षतु । पुष्टिपतिः पोषाभिमानी देवो मयि पुष्टिं शरीरपोषं दधातु स्थापयतु । तथा मयि प्रजां पुत्रादिरूपां प्रजापतिर्देवो दधातु । स्वाहेति गतम् ॥४॥

1 B[1] ०होमादेरङ्गभूता ; D[2] काम्याङ्गभूता
2 D[2] omits गोष्ठे.
3 D[2] शोभनावच्छेद०
4 M[1] & M[2] रुद्रपुत्रा मरुदादयो
5 M[1] & M[2] यः सहस्रबाहु : पशुरक्षणाय बाहुसहस्रोपेतो गौपत्यो गवां पती-रुद्रः तस्य पुत्रो मरुद्गणो
6 *T. Br.* 3. 2. 1. 3, 4
7 D[2] सञ्चारस्थान्

कौतोमतं संवननं सुभागंकरणं मम ।
नाकुली नाम ते माताथाहं पुरुषानयः[1] ।
यन्नौ कामस्य विच्छिन्नं तन्नौ सं धेह्योषधे ॥५॥

[ गो गृ ४. ५. १६ ; खा गृ ४. १. ११ द्रः ]

कुतोमत इदमार्षं सद्विपाद्गायत्रमनुष्टुप् छन्दः। ईश्वराय परिजपितयुग्ममहाफलदाने विनियोगः।

कुतोमान् नाम ऋषिः तेन दृष्टं कौतोमतम्। किं तत्—संवननम्—वन षण सम्भक्तौ—सम्भजनम्। मम सुभागङ्करणम् असुभगः सुभगः क्रियते तेनेति सुभागङ्करणम्। आढ्यसुभगेत्यादिना [पा ३. २. ५६] सुभगपदे उपपदेषु कृञः करणे ख्युन्प्रत्ययः। भकाराकारस्य छान्दसं दीर्घत्वम्। प्रियङ्करणम्। कथम्[2]—नकुलीव नाकुली जिह्वा ओष्ठापिधाना। सा वै तव माता निर्मात्री। ततस्त्वं वाग् नाकुलीत्यभिधीयसे। तथा च मनुवर्णः[3]—एष वाव प्रत्यक्षं वाग् यद् जिह्वेति। मम त्वं माता। कथम्—कः परः प्रियवादिनामिति जनवादात्। अथ वाक्योपादाने। यतो मधुरप्रियवागहं यजमानः पुरुषानयः पुरुषान् वशमानेता। अतो नौ आवयोर्दम्पत्योः न किञ्चित् कामस्य इच्छाया विच्छिन्नम् अपरिपूर्णमीश्वरस्य विद्यते। मम तु यत् नास्ति द्रव्यं तत् हे ओषधे महावृक्षफलसमुदाय नौ आवयोर्दम्पत्योः सन्धेहि सन्ततं कुरु पर्याणयेति यावत्। महावृक्षशब्दो न्यग्रोधादिषु क्षीरवृक्षेषु रूढः स्वाजीव्ये[4] वाऽऽम्रादौ ॥५॥

कौतोमतमित्ययं सख्यकामस्य फलाभिमन्त्रणे विनियुक्तः। सूत्रितं च [ खा गृ ४. १. ११ ]—येनेच्छेत् सहकारं कौतोमतेनास्य महावृक्षफलानि परिजप्य दद्यादिति ॥ येन सख्यमिच्छेत्तस्मा उदुम्बरफलानि कौतोमतमित्यभिमन्त्र्य दद्यादित्यर्थः[5] ।

1 Sāyaṇa पुरुषामयः
2 B omits कथम्.
3 A तथा च मनुवर्णोरोषाः वरुव प्रत्यक्षः वालपजिह्वेति मम तु त्वं माता ; I मनुवर्णा ऐषां वरुव प्रत्यक्षं वालपजिह्वेति मम त्वन्माता
4 B स्वाजीवे
5 See Rudraskanda's commentary.

कौतोमतमिति। कौतोमतस्यार्षेयमिदं[1] जागतं फलदेवताकम्।

कौतोमतम्—कुतः कुत्रापि नास्ति अमतमसंप्रतिपन्नं[2] यस्य [3]तत् कुतोमतमुदुम्बरादि[3]। तस्य संबन्धि फलं कौतोमतम्। एतच्च संवननं सम्यग् वननीयं सर्वैः संभजनीयम्। मम मह्यम् सुभागंकरणम्। भगः सौख्यम्। शोभनश्चासौ भगश्च सुभगः। तस्य करणं कारकम्। भकारस्य छान्दसो दीर्घः। ईदृशं फलं रक्षामीति[4] संबध्यते। किञ्च हे फल ते तव माता नाकुली। नकुली जिह्वा ओष्ठापिधाना नकुलीत्यत्र[5] तथोक्तत्वात्। तस्य संबन्धिनी वाङ्नाकुली। सा ते माता निर्मोली। वाचा हि सर्वं वस्तु[6] ईदृशमीदृशमिति[7] निर्मीयते[8]। अथातः पुरुषामयः[9] पुरुषेषु मध्य आमयवन्तं [10]परित्यज्याहं त्वां संभजामीति शेषः। किं च हे ओषधे उदुम्बरादिफलविशेष कामस्येच्छाया विषयमन्वितं यद्धनं कनकादिकं नौ आवयोर्जायापत्योर्विच्छिन्नं तत् आवयोः संधेहि संधानं कुरु संयोजय ॥५॥

## वृक्ष इव पक्वस्तिष्ठसि सर्वान् कामान् भुवस्पते।
## यस्त्वैवं वेद तस्मै मे भोगान् धुक्ष्वाक्षतान् बृहन् ॥६॥

[ गो गृ ४. ५. २२ ; खा गृ ४. १. १२ द्रः ]

**अस्य पञ्चर्चस्याप्यनुष्टुप् छन्दः। प्रथमाया भोगकामस्यादित्योपस्थाने विनियोगः। आदित्यो देवता।**

**भुवः पृथिव्या भुवनानां वा पतिः स्वामी पालयिता आदित्यः। कथम्—आदित्याज्जायते वृष्टिरिति[11] वृष्टिप्रदानात्। तस्यामन्त्रणम्। हे भुवस्पते आदित्य बृहन् महत्वगुणसंयुक्त कामान् मनोरथान् वृक्ष इव पक्वस्तिष्ठसि[12] अधितिष्ठसि सर्वेषामभिलषितानामर्थानां प्रदानयोग्यत्वेनेश्वरो भवसि। योऽहं त्वा त्वाम् एवं प्रागुक्तप्रकारेण वेद जानामि तस्मै मह्यम्। भुज्यन्त इति लोकोप-**

1 D² ०स्यार्षमिदं
2 D² & G अमतोऽसंप्रतिपन्नो ; M¹ & M² अमतं असंप्रतिपन्नो
3 M¹ & M² रसं न कुतोमतौ उदुम्बरादिः
4 D² & G भक्षयामीति
5 See *Ch. Br.* 1. 7. 15.
6 B¹ वक्तव्यं ; D² & G प्रस्तुत्य
7 D² & G तदीदृशं तदीदृशमिति
8 D² निर्मायते ; M¹ निर्णीयते
9 C & Guṇ. read पुरुषानयः.
10 D² & G परित्यज्य
11 *Manu* 3. 76
12 B पक्वः अधितिष्ठसि

**कारकाः स्त्रीधेनुशाल्यादयो भोगाः तान् अक्षतान् अक्षयान् धुक्ष्व—दुह प्रपूरणे—प्रकर्षेण पूरय ॥६॥**

पृथिवीपतित्वकामस्य वृक्ष इवेत्यादीनां पञ्चमन्त्राणां तण्डुलैर्जलहोमे विनियोगः। सूत्रकार आह [ खा गृ ४. १. १२ ]—अर्धमासव्रती पौर्णमास्यां रात्रौ नाभिमात्रं प्रगाह्याविदासिनि ह्रदेऽक्षततण्डुलानास्येन जुहुयादुदके वृक्ष इवेति पञ्चभिः पार्थिवं कर्मेति ॥ तथैषां पृथक् पृथग् विनियोगोऽपि[1] सूत्रितः। तत्र [2]प्रथमस्य विनियोगमाह [ खा गृ ४. १. १३ ]— प्रथमयादित्यमुपतिष्ठेद्भोगकामोऽर्थपतौ प्रेक्ष्यमाण इति ॥ [3]एषु प्रत्येकं विनियोगेषु [4]नार्धमासादिनियमः।

पाठस्तु—वृक्ष इव पक्व इति। अनुष्टुबस्य च्छन्दः। आदित्यो देवता।

हे भुवस्पते भूम्याः [5]वृष्ट्युदकद्वारेण पालयितरादित्य। बृहस्पत इति केचित् पठन्ति। तस्मिन्पक्षे बृहतो लोकस्य पालयितः। तव मण्डलं पक्वो वृक्ष इव [6]परिणतपर्णफलाद्यु-पेतो वृक्षो यथा पिङ्गलवर्णो दृश्यते तद्वत्तिष्ठति। [7]अनेकैरस्माकं देयैः फलैः शोभनपर्णैश्च[7] युक्तं वर्तत इत्यर्थः। अतः सर्वान् कामान् काम्यमानान् भोगान्। प्रयच्छेति शेषः। [8]किञ्च [9]यस्त्वहं त्वा[10] त्वामेवमुक्तविधं वेद जानामि तस्मै मे मह्यं तव स्वरूपमधिगच्छतेऽक्षतान-क्षीणान् बहून् इयत्तारहितान् भोगान् धुक्ष्व पूरय ॥६॥

**ऋतं सत्ये प्रतिष्ठितं भूतं भविष्यता सह।**
**आकाश उप नि रज्जतु मह्यमन्नमथो श्रियम् ॥७॥**

[ गो गृ ४. ५. ३१ ; खा गृ ४. १. १४ द्रः ]

**अस्या द्वितीयाया आदित्ये परिविष्यमाणे बृहत्पत्रस्वस्त्ययनकामस्याक्षत-तण्डुलहोमे विनियोगः। आदित्यो देवता।**

**ऋतं यज्ञकर्म सत्ये प्रतिष्ठितम्। भूतम् अतिक्रान्तं कालरूपं वस्तुजातं वा भविष्यता भाविना कालेन वस्तुजातेन वा सह सार्धं सत्ये आदित्ये एव**

1 D² & G omit अपि.
2 D² & G प्रथमस्मिन्
3 D² & G येषु
4 D² & G सार्ध०
5 D² प्रद्योतक० ; G पद्योक०
6 D² परिणतः पर्ण०
7 D² अवनौ शोभनवर्णेन
8 D² omits किञ्च.
9 D² यस्त्वाहं
10 D² omits त्वा.

**प्रतिष्ठितं तत्प्रभवत्वात् कालादेः। आकाशस्थत्वाच्चाकाश आदित्य एवोच्यते मञ्चाः क्रोशन्तीतिवत्। आदित्यो मह्यमन्नमदनीयम्। अथो अपि च श्रियं लक्ष्मीम्। उपनिरज्जतु ददातु उपसमोपे भूत्वा अस्मान् प्रत्युपरोधं गच्छत्विति ॥७॥**

अथ द्वितीयमन्त्रस्य कामनाभेदेन विनियोगमाह। तथा च सूत्रम् [खा गृ ४. १. १४]—द्वितीययाक्षततण्डुलानादित्ये परिविष्यमाणे बृहत्पत्त्रस्वस्त्ययनकाम इति ॥

ऋतं सत्ये प्रतिष्ठितमिति। अनुष्टुबस्य च्छन्दः। आदित्यो देवता।

सत्ये सत्यभूते प्रत्यक्षेण दृश्यमान आदित्य ऋतं व्यावहारिकसत्यभूतं[1] कृत्स्नं जगत् प्रतिष्ठितम्। सूर्याधीनत्वाज्जगन्निर्वाहस्य। सूर्य आत्मा जगतस्तस्थुषश्चेति हि श्रुतिः[2]। न केवलं वर्तमानमेव किंतु भूतं भूतकालविशिष्टमपि जगत् भविष्यता आगामिकालविशिष्टेन जगता सह सत्ये आदित्ये प्रतिष्ठितम्। [3]पूर्वमुत्पन्नमुत्पद्यमानमुत्पत्स्यमानं च सर्वं सूर्याधीनमित्यर्थः। कालात्मकत्वादित्यभिप्रायः। आकाश आ समन्तात् काशमान आदित्यो मह्यमन्नं प्रदत्तमुपनिरज्जतु नितरामुपरक्तो भवतु। [4]अथो अपि च[4] श्रियं श्रयणीयमैश्वर्यं च [5]उपनिरज्जतु ददातु[5]। यद्वा स आदित्य आकाश उपनिरज्जतु उप समीपे समन्ततो नितरां रज्जतु परिविष्टो भवत्वित्यर्थः। अथापि स मह्यमन्नं श्रियं च ददात्वित्यर्थः[6] ॥७॥

**अभिभागोऽसि सर्वस्मिंस्तदु सर्वं त्वयि श्रितम्।**
**तेन सर्वेण सर्वो मा विवासन वि वासय ॥८॥**

[ गो गृ ४. ५. ३२ ; खा गृ ४. १. १५ द्रः ]

**अस्यास्तृतीयायाश्चन्द्रमसि परिविष्यमाणे क्षुद्रपशुस्वस्त्ययनकामस्य मिश्रतिलतण्डुलहोमे विनियोगः। चन्द्रमा देवता।**

1 M¹ & M² व्यावहारिकं सत्यभूतं ; D² व्यावहारिकभूतं
2 *Ṛv.* 1. 115. 1
3 D² & G पूर्वमुत्पन्नमुत्पत्स्यमानं
4 B¹, D² & G अथापि
5 B¹ ददातु ; D² & G जातमुपनिरज्जतु ; M¹ & M² दातूप०
6 D² ददात्विति शेषः

येन त्वं ज्योत्स्नामृतप्रवाहेण सर्वस्य जगत आभिमुख्येन भागोऽसि भक्ता सेविता आह्लादिता भवसि। भजसीति भागः। कृत्यल्युटो बहुलमिति [पा ३. ३. ११३] वचनात् कर्तर्यपि घञ्। तत् जगत्। उ पादपूरणे। सर्वं समस्तं त्वयि श्रितम् त्वत्प्रकाशोपजीवकत्वेन। तेन सर्वेण सर्वः सम्पूर्णः सन्। हे विवासन प्रकाशयितः मा मां दारिद्र्यानिष्टतमोऽनृताद्[1] विवासय वाञ्छितकामसम्पन्नं मां कुर्वित्यर्थः ॥८॥

अथ तृतीयमन्त्रस्य कामनाभेदेन विनियोगमाह [खा गृ ४. १. १५.]—तृतीयया चन्द्रमसि तिलतण्डुलान् क्षुद्रपशुस्वस्त्ययनकाम इति ॥ परिविष्यमाणे चन्द्रमसि मिश्रीकृत्य होम इत्यर्थः[2]। क्षुद्रपशवोऽजाविकादयः।

अभिभागोऽसीति। अनुष्टुबस्य च्छन्दः। परिवेषचन्द्रमा देवता।

सर्वस्मिन् जगति हे चन्द्र[3] देव अभिभागोऽसि [4]भागो भजनीयोंऽशः[4] अभिप्राप्तभागो भवसि। सर्वेषु भागेषु वर्तस इत्यर्थः। तदु सर्वम्। उ इत्यप्यर्थे। तत्सर्वं जगदपि त्वयि श्रितं वर्तते। हे विवासन सर्वस्य विशेषेण विवासयितः[5] सर्वः उक्तरूपेण सर्वात्मकस्त्वं तेन त्वयि प्रतिष्ठितेन सर्वेणाजाविकादिना क्षुद्रपशुना मा मां विवासय। यद्वा हे विवासन—विवासो वर्जनम्—तमोवर्जनेन त्वया सहाविभक्तेन सर्वेण सर्वः सर्वात्मकस्त्वं मा मां विवासय पापाद्वियोजय ॥८॥

कोश इव पूर्णो वसुना त्वं प्रीतो ददसे धनम्।
अदृष्टो दृष्टमा भर सर्वान् कामान् प्र यच्छ मे ॥९॥

[गो गृ ४. ५. ३३; खा गृ ४. १. १७ द्र: ]

अस्याश्चतुर्थ्या आदित्यमुपस्थायार्थान् प्रपद्येतेत्यत्र[6] विनियोगः। आदित्यो देवता।

हे आदित्य यस्त्वं कोश इव भाण्डागार इव वसुना धनेन पूर्णः सम्भृतः। अनेन दानयोग्यत्वमाह। प्रीतः प्रसन्नः धनं ददसे[7] भक्तानाम् [8]इत्यनेन

1 A, B & V ०तमोऽनृतं
2 D² & G होममित्यर्थः; See Rudra.
3 D² चन्द्रत्वम्
4 D² omits it.
5 M¹ & M² वासस्थान
6 See *G. Gṛ.* 4. 5. 33.
7 Sāyaṇa दधसे
8 A & B omit इति.

**चौदार्यम्। किम्भूतः—अदृष्टः अनधिगम्यः[1]। तथा च श्रुतिः—हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात् सर्व एव सुवर्ण इति[2]। दृष्टफलं ग्रामपुत्रपश्वादिकम् आभर आहर आनय पुषाण वा। किञ्च सर्वान् कामानभिलाषान् प्रयच्छ देहि मे मह्यमिति ॥२॥**

चतुर्थस्य कामनाभेदेन विनियोगमाह [खा गृ ४. १. १६]—चतुर्थ्यादित्यमुपस्थाय गुरुमर्थमभ्युत्तिष्ठेदिति ॥ महार्घद्रव्यमाप्तुमुद्योगं कुर्यादित्यर्थः।

कोश इव पूर्ण इति। अनुष्टुबस्य च्छन्द आदित्यो देवता।

हे आदित्य वसुना वासकेन धनेन पूर्णः कोश इव धनागार इव स्थितस्त्वं प्रीतोऽस्मत्स्तुत्या परितुष्टः सन् धनं [3]रतिसाधनं गवादिकं दधसे[4] पुष्णासीत्यर्थः। किञ्च अदृष्टोऽन्यैर्दुर्विज्ञेयस्त्वं दृष्टं दर्शनयोग्यं धनमाभराहर। स्पष्टश्चतुर्थः पादः ॥६॥

आकाशस्यैष आकाशो यदेतद्भाति मण्डलम्।
एवं त्वा वेद यो वेदेशानेशान् प्र यच्छ मे ॥१०॥

[गो गृ ४. ५. ३४; खा गृ ४. १. १७ द्रः]

**पञ्चम्यादित्यमुपस्थाय गृहान् प्रपद्येतेत्यत्र[5] विनियोगः। आदित्यो देवता। आकाशस्य अवकाशदानवत एषः प्रत्यक्ष आदित्यः आकाशः। यदेतद् भाति दीप्यते मण्डलम् दिवि। उक्तं च[6]—एष वा उदेति न वा एनमन्यज्ज्योतिषां ज्योतिष्प्रत्युदेतीति च। एवम् अनेन प्रकारेण त्वा त्वां योऽहं यजमानो वेद जानामि तस्य मे मम हे वेदेशान ऋग्यजुःसामप्रभव ईशान् प्रयच्छ यत्कामोऽहं करवाणि तत्कामसम्पादनार्थमीश्वरान् मम समर्पयेत्यर्थः ॥१०॥**

आकाशस्येति पञ्चमीं जपित्वादित्योपस्थानानन्तरं स्वगृहं गच्छेत्। सूत्रितं च [खा गृ ४. १. १७]—पञ्चम्यादित्यमुपस्थाय गृहानेयादिति ॥ एवं कृते[7] कर्म फलवद्भवति।

पाठस्तु—आकाशस्यैष इति। छन्दोदेवते पूर्ववत्।

हे सूर्य तव[8] यदेतन्मण्डलं भात्येष मण्डल आकाशस्य स्वाश्रयभूतस्यान्तरिक्षस्याकाशः

1 S आगमनसमधिगम्यः
2 *Ch. Up.* 1. 6. 6
3 M¹ & M² प्रीतिसाधनं
4 B¹ adds धत्से.
5 See *G. Gṛ.* 4. 5. 34.
6 *Tāṇḍya Br.* 20. 5. 4
7 D² कृतं
8 D² & G omit तव.

सर्वतः प्रकाशः। हे ईशान सर्वस्य स्वामिन् त्वा त्वामेवमुक्तप्रकारेण यो वेद जानाति स एव वेद। तव तत्त्वं जानातीत्यर्थः। अत एवंविदे मे मह्यमीशानीशितव्यान् भोगान् प्रयच्छ ॥१०॥

**भूर्भुवः स्वरों सूर्य इव दृशे भूयासमग्निरिव तेजसा वायुरिव प्राणेन सोम इव गन्धेन बृहस्पतिरिव बुद्ध्याश्विनाविव रूपेणेन्द्राग्नी इव बलेन ब्रह्मभाग एवाहं भूयासं पाप्मभागा मे द्विषन्तः ॥११॥**

[ आ गृ १. १४. ४। गो गृ ४. ६. १, २ द्र: ; खा गृ ४. १. १८ ]

निगदोऽयम्। अनकाममारं नित्यं प्रयुञ्जीत न पापरोगान्नाभिचाराद्भयमित्यस्मिन्नर्थे[1] विनियुक्तोऽग्निवायुसूर्यात्मदेवताकः। तथा च कात्यायनः[2]—अग्निर्वायुः सूर्य इत्येवं व्याहृतयः प्रोक्ता व्यस्ताः। समस्तानां प्रजापतिः। ओङ्कारः सर्वदेवत्यः। ब्राह्मो दैव आध्यात्मिकः पारमेष्ठ्यो वा[3]।

भूर्भुवः स्वरोमिति मनुः[4]। भूः पृथिवी। भुवः अन्तरिक्षम्। स्वः स्वर्गः। ओमित्यात्मा। शेषमुपमाद्वारेण शंसनम्। सूर्य इव दृशे दर्शनाय। भूयासम् अहं सम्पद्ये। यथाग्निः तेजसा करणभूतेन उपलक्षितो वा [5]आरोग्ययुक्तोऽयुक्तपापरोगो विनियुक्ताभिचारादिभयविहीनः[5] तद्वदहमपि भूयासं भवामि। एवं वाय्वादिष्वपि योज्यम्। ब्रह्मभागो ब्रह्मावयवोऽहं भूयासम्। किञ्च पाप्मभागाः पापांशा मे मम द्विषन्तः अमित्रभूता भवन्तु। तैः सह कदाचिन्मम सम्बन्धो मा भूयादित्याशास्यते। पुनर्भूयासमिति वचनमाशास्यस्यार्थस्य गौरवार्थम् ॥११॥

इति भट्ट-गुणविष्णुविरचिते छान्दोग्यमन्त्रभाष्ये
द्वितीयप्रपाठके चतुर्थः खण्डः ॥

1 See *G. Gṛ.* 4. 6. 1, 2.

2 *Sarvānukramaṇī* 2. 8-11, Macdonell's Ed. pp. 1f.

3 Macdonell puts पारमेष्ठ्यो वा before ब्राह्मो.

4 The Mantra भूर्भुवः etc. occurs in various texts. See *Ch. Br.* 1. 6. 31.

5 B आरोग्ययुक्तपापरोगविनियुक्ताभि०

भूर्भुवः [1]स्वरोमित्यादिकं स्वेच्छामरणकामो यावज्जीवं जपेत्। सूत्रितं च [ खा गृ ४. १. १८ ]—अनकाममारं नित्यं जपेद्भूरितीति ॥ अहरहरामरणाद्यो जपेदनकाममरणं स लभेत। अकामो न म्रियत इत्यर्थः[2] ॥

भूर्भुवः स्वरोमिति। यजुर्निगदोऽयमाशीर्देवताको भूरादिदेवताको वा।

भूर्भुवः स्वरिति[3] भूरादयस्त्रयो लोकाः। ओमिति तत्कारणभूतं ब्रह्मोच्यते। [4]तस्य वाचकः प्रणव इति पातञ्जलं सूत्रम्[5]। ओमिति ब्रह्म ति हि श्रुतिः[6]। लोकत्रयं तत्कारणभूतं ब्रह्म च प्रार्थये[7] इति शेषः। किञ्च सूर्य इव। सूर्यो यथा सर्वैर्दर्शनीयो भवति तद्वदहमपि दृशी द्रष्टुं योग्यो भूयासम्। सर्वदा सर्वैर्दृश्यमानो भवानीत्यर्थः। तथाग्निरिव। अग्निर्यथा तेजस्वी भवत्येवमहमपि तेजसा युक्तो भूयासम्। एवम्[8] उत्तरेष्वपि वाक्येषु युक्तो भूयासमिति योज्यम्। वायुरिव प्राणेन। वायुर्यथा नित्यं चेष्टते तद्वदहमपि प्राणेन प्रकर्षेण देहे चेष्टमानेन वायुना। सोम इव। सोमश्चन्द्रमाः। स इवाहमपि गन्धेन परिमलेन। अथवा गन्धशब्देनात्र सर्वप्रियत्वमुच्यते। तेन युक्तो भूयासम्। बृहस्पतिरिव। बृहस्पतिर्देवमन्त्री स चातीव बुद्धिमान्। तद्वदहमपि [9]लौकिकविषयबुद्ध्या युक्तः। अश्विनाविव। अश्विनौ यथा देवानां मध्ये रूपवन्तौ तद्वदहमपि रूपेण। इन्द्राग्नी इव बलेन। इन्द्राग्न्योः प्रकृष्टबलत्वं प्रसिद्धम्। तद्वद्बलेन सामर्थ्येन। किञ्चाहम्। ब्रह्म परिवृढं कर्म। तद्भाग एव सर्वदा सुकृतसाधनतत्कर्मोपेत एव भूयासम्। एवशब्देन व्यावर्त्यमाह। मे मम द्विषन्तो द्वेषं कुर्वन्तः शत्रवः पाप्मभागा नरकोत्पादकपापभागयुक्ता[10] भवन्त्विति शेषः ॥११॥

॥*॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणमन्त्रपर्वणि द्वितीये प्रपाठके चतुर्थः खण्डः ॥*॥

---

1 G सुवरोमि०

2 See Rudra on *Kh. Gr* 4. 1. 1.

3 G सुवरिति

4 D² & G ब्रह्म

5 *Yogasūtra* 1. 2. 7

6 *Tait. Up.* 1. 8

7 D² प्रार्थ्यते

8 D², G omit एवम्.

9 M¹ & M² लौकिकवैदिकविषय०

10 D² ०पाप्मयुक्ता ; G ०पापयुक्ता

## द्वितीयप्रपाठके पञ्चमः खण्डः

मूर्ध्नोऽधि मे वैश्रवणाञ्छिरसोऽनुप्रवेशिनः ।
ललाटाद्घस्वरान् घोरान् विघनान् वि बृहामि वः स्वाहा ॥१॥

[ गो गृ ४. ६. ५ ; खा गृ ४. १. १६ द्रः ]

**मूर्ध्न इत्यादेर्मन्त्रसप्तकस्यानुष्टुप् छन्दः। अग्निर्देवता दर्शपूर्णमासौ वा। अलक्ष्म्या अपनोदने विनियोगः।**

**मूर्ध्नः अधि उपरि अनुप्रवेशिनः वैश्रवणान् यक्षान् घस्वरान् घस्मरान्। छन्दसि वर्णव्यत्ययेन मकारस्य वकारः। अदनशीलान्। घोरान् भयानकान् विविधं [1]ये घ्नन्ति हिंसन्ति ते[1] विघनाः। अतस्तान्। वः युष्मान् शिरसः सकाशात् ललाटात् च अहमेकैकाज्याहुतिप्रयोगेण विबृहामि। बृह उद्यमे। अपसारयामि उच्चाटयामीत्यर्थः। सर्वत्र स्वाहेत्युक्तार्थम् ॥१॥**

मूर्ध्नोऽधि म इत्यादीनां षण्णां प्राजापत्यस्य च विनियोगः सूत्रितः [ खा गृ ४.१.१६,२० ] —यजनीये जुहुयान्मूर्ध्नोऽधि म इति षड्भिर्वामदेव्यग्भिर्महाव्याहृतिभिः प्राजापत्यया च ॥ अलक्ष्मीनिर्णोद इति ॥

तत्र प्रथमः—मूर्ध्नोऽधि म इति। एतदादिमन्त्रषट्कस्य वामदेव ऋषिरनुष्टुप् छन्दः। तत्तन्मन्त्रप्रतिपाद्याङ्गाधिष्ठातारः[2] षण्मूर्तयो देवताः।

मे मम शिरसः श्रवणाच्छ्रोत्रान्मूर्ध्नश्चाध्यनुप्रवेशिनः। अधीति सर्वत्र संबध्यते। शिरस इत्युत्तमावयवसामान्यात्। मूर्ध्न इति तदुपरि मध्यप्रदेशात्। मे मूर्ध्नि श्रवणे शिरसि चानुप्रविष्टानित्यर्थः। वा इत्यनर्थकम्[3]। वैश्रवणानिति पाठे[4] विश्रवणस्य पुत्रानसुरान् व्याधिरूपेण शिरआदिषु प्रविष्टानित्यर्थः। किंच ललाटादध्यनुप्रविष्टान् घस्वरान् घस्मरान्—घस्लृ अदने—अदनशीलान् घोरान् भयंकरान् विघनान् विविधहन्तॄन् वो युष्मान् विबृहामि। विविधं नाशयामीत्यर्थः। स्वाहेति स्पष्टम् ॥१॥

1 A & B घ्नन्ति हिंसन्तीति
2 M¹ & M² ०प्रतिपाद्यमानाङ्गाधिष्ठातारो
3 D² & G इत्यनर्थः
4 Gun. has adopted वैश्रवणान्.

ग्रीवाभ्यो मे स्कन्धाभ्यां[1] मे नस्तो मेऽनुप्रवेशिनः ।
मुखान्मे बद्बदान् घोरान् विघनान् वि बृहामि वः स्वाहा ॥२॥

[ गो गृ ४. ६. ५ ; खा गृ ४. २. २० द्रः ]

**वैश्रवणान् बद्बदान् दुर्वाचिनः[2] घोरान् विघनान् मे मम गात्रं गात्रम् अनुप्रवेशिनः सर्वगात्रोपद्रवकारिणः वः युष्मान् ग्रीवाभ्यः स्कन्धाभ्यां नस्तः नासिकातः मुखाच्च सकाशात् अनया आज्याहुत्या विबृहामि ॥२॥**

अथ द्वितीयः—ग्रीवाभ्यो म इति ।

मे ग्रीवाभ्यः । अवयवापेक्षया बहुवचनम् । ग्रीवावयवेभ्यः । तथा स्कन्धाभ्यः । स्कन्धेभ्य इत्यर्थः । नस्तो नासिकातः । तथा मुखान्मे वदनाच्चानुप्रवेशिन आनुपूर्व्येण प्रविष्टान् । बद्बदान् । [3]बध बन्धने । बध्नातीति बदः[3] । वदन्तीति वदः[4] । अत्रान्तर्भाविण्यर्थो द्रष्टव्यः । [5]व्यथनार्थं देहं संबध्य वादयन्त्याक्रोशयन्तीति बद्बदास्तान् । घोरानित्यादि शिष्टं पूर्ववत् । प्रत्यवयवं म इति पृथङ्निर्देश आदरार्थः ॥२॥

बाहुभ्यां मे यतो यतः [6]पार्श्वयोरुत्तु तानधि[6] ।
उरस्तो बद्बदान् घोरान् विघनान् वि बृहामि वः स्वाहा ॥३॥

[ गो गृ ४. ६. ५ ; खा गृ ४. २. २० द्रः ]

**तानेव वैश्रवणान् मम सर्वाङ्गोपद्रवकारिणः बद्बदान् घोरान् विघनान् वः युष्मान् मे मम यतो यतः इतश्चेतश्च अनुप्रवेशिनः । बाहुभ्यां सकाशात् पार्श्वयोरुत्तु तानधि । तु स्वार्थे । अधि उपरि भावे । पार्श्वयोश्चोपरि । उरस्तः वक्षसः । तान् सर्वान् उद्विबृहामीति सम्बन्धः ॥३॥**

1 Sāyaṇa explains स्कन्धाभ्यः.

2 B दुःशीलिनः ; the explanatory word दुर्वाचिनः suggests that Guṇ. has derived the second part of the expression बद्बदान् from वद् to speak.

3 D[2] बध बन्धने, omits बध्नातीति बदः. But *Dhātupāṭha* records बद in the sense of स्थैर्य. We meet in the *Ṛv* with expressions like बद्बधे ( 1. 80. 13 ; 81. 5 ; 7. 61. 4 ), बद्बधानः ( 7.61.1 ), बद्बधानस्य ( 1.52.10 ), बद्बधानाः ( 4. 19. 8 ; 22. 7 ) and बद्बधानान् ( 5.32.1 ; 2 ) which Sāyaṇa derives from बध् or बाध्.

4 D[2] वादः

5 B[1] व्यधनार्थं ; M[1] & M[2] व्ययनार्थं

6 D[2] पार्श्वयोरुद्भटानधि

अथ तृतीयः—बाहुभ्यां म इति ।

मे मम बाहुभ्यां यतो यतो यस्माद्यस्माद् बाहुप्रदेशात्। तु अपि च। पार्श्वयोः [1]उत् ऊर्ध्वं तान्[1] अनुप्रवेशिनः। तथोरस उरःप्रदेशादप्यनुप्रविष्टान् विवृहामि। शिष्टमुक्तम् ॥३॥

वङ्क्षणाभ्यां[2] मे लोहितादान् योनिहान् [3]पज्रिहानधि ।
ऊरुभ्यां[4] निश्लिषान्[5] घोरान् विघनान् वि बृहामि वः स्वाहा ॥४॥

[ गो गृ ४. ६. ५ ; खा गृ ४. २. २० द्रः ]

लोहितमदन्ति भक्षयन्तीति लोहितादाः। योनिर्गुह्यस्थानं तां घ्नन्ति ये ते योनिहाः। पज्रि[6] शुक्रं तद्घ्नन्ति[7] विनाशयन्तीति पज्रिहाः[8]। अन्येष्वपि दृश्यते इत्यत्रापिशब्दः सर्वविधेर्व्यभिचारार्थः[9]। तेन धात्वन्तराद्धन्तेर-सप्तम्यन्तेऽपि कर्मण्युपपदेऽपि धातोर्डप्रत्ययः[10]। तान् सर्वान् वो युष्मान् वैश्रवणान् निश्लिषान् नितरां सुष्ठु श्लिष्यन्ति लगन्तीति निश्लिषाः। इगुपधज्ञाप्रीकिरः क इति [पा ३. १. १३५] कर्तरि कप्रत्ययः। वङ्क्षणाभ्याम् ऊरूदरसन्धिभ्याम्[11] ऊरुभ्यां च सकाशात् विबृहामीति सम्बन्धः ॥४॥

अथ चतुर्थः—वङ्क्षणाभ्यो म इति ।

मे मम वङ्क्षणाभ्यो ऊरुसन्धिभ्योऽनुप्रवेशिनः। लोहितादान् सर्वाङ्गाश्रितरुधिरभक्षकान्। अयोनिहान् प्रवृद्धान् पज्रिहान् बलक्षयकरान्। ऊरुभ्यां निश्लिषान् निविडसंबद्धान्। अधीत्ययं विबृहामीत्यत्र संबध्यते ॥४॥

जङ्घाभ्यां मे यतो यतः [12]पार्ष्ण्योरुत्तु तानधि[12] ।
पादयोर्विकिरान् घोरान् विघनान् वि बृहामि वः स्वाहा ॥५॥

[ गो गृ ४. ६. ५ ; खा गृ ४. २. २० द्रः ]

1 D² उद्धटान्
2 Sāyaṇa वङ्क्षणाभ्यो
3 V पजृहानधि
4 V ऊरुभ्यो
5 *Vedic Concordance*, D² Text & Samasrami निश्लिषो, but Sāyaṇa even in D² निश्लिषान्
6 V पजृ
7 A तद्ध्यून्ति
8 V पजृहाः
9 See *Kāśikā* on *P.* 3. 2. 101.
10 V रिषावडप्रत्ययः
11 A, B & V ०सम्बन्धिभ्याम्
12 D² पार्ष्ण्योरुद्धटानधि

**पाष्ण्योंश्च पादयोश्च अधि उपरि मे मम स्थितान् यतो यत इतश्चेतश्च विकिरान् विक्षेपकरान् विघ्नकरान् वैश्रवणान् घोरादिगुणयुक्तान् वः युष्मान् जङ्घाभ्यां सकाशात् अनयाज्याहुत्या विबृहामि अपसारयामि[1] ॥५॥**

अथ पञ्चमः—जङ्घाभ्यां म इति ।

मे जङ्घाभ्यां यतो यतो यस्माद्यस्मात् प्रदेशात् । अपि च पाष्र्ण्योः पार्ष्णिप्रदेशयोः पादयोश्च । विकिरान् विविधं विक्षिपन्तीति विकिराः सर्वत्र व्याप्ताः । तानधि विबृहामि ॥५॥

परिबाधं यजामहेऽणुजङ्घं[2] शबलोदरम् ।
यो नोऽयं परिबाधते दानाय [3]भगाय च स्वाहा ॥६॥

[ गो गृ ४. ६. ५ ; खा गृ ४. २. २० द्रः ]

**यः कश्चिद्देवताविशेषः नः अस्मान् दानाय दानार्थं भगाय च बलार्थं प्रवृत्तान् परिबाधते अपद्रवति तं परिबाधं विघ्नकरम् । अणुजङ्घम् अणू सूक्ष्मे जङ्घे यस्य तं तथोक्तम् । केचित् स्थूलजङ्घमिति व्याचक्षते । शबलोदरं नानारूपोदरं वयमनयाज्याहुत्या यजामहे पूजयामः । येन पूजितः सन्ननुकूलो भवति ॥६॥**

अथ षष्ठः—परिबाधं यजामह इति ।

मन्त्रपञ्चकेन सर्वाङ्गपीडाकारिणोऽपनुद्य तदभिमानिदेवमनेन प्रार्थयते । परिबाधं परितः सर्वाङ्गेषु बाधमानं निजङ्घं नितरां घातकं निकृष्टजङ्घं वा । शबलोदरं शबलवर्णोदरोपेतम् । [4]उक्तरूपं पापाभिमानिनं[4] देवं यजामहे पूजयामः । योऽयमुक्तलक्षणो देवो नोऽस्मान् परिबाधते देहे परितः पीडां करोति । [5]किमपेक्ष्येत्युच्यते । दानाय हविः-प्रदानार्थम् । दोऽवखण्डने । सर्वावयवपीडनाय[6] । भवाय[7] स्वप्रादुर्भवनाय च । तं यजामह इति संबन्धः ॥६॥

1 A अपसरामि ; B अपहरामि ; V अपसमर्पयामि
2 D[2] ०णुजङ्घं, but *Sāyaṇa* निजङ्घं
3 D[2] adds च before it.
4 B[1] उक्तरूपाभिमानिनं
5 B[1] कमवेक्ष्य तदुच्यते ; M[1] & M[2] कमपेक्ष्येत्युच्यते
6 B[1] सर्पादिपीडनाय
7 B[1] adds शरीरे ; M[1] & M[2] च शरीरे.

अपेहि त्वं परिबाध मा विबाध वि बाधथाः ।
सुगं पन्थानं मे कुरु येन मा धनमेष्यति स्वाहा ॥७॥

[ गो गृ ४. ६. ५ द्रः ; खा गृ ४. १. २१ द्रः ]

**हे परिबाध परि समन्तात् बाधस्य दुःखस्य कर्तः। अपेहि त्वम् अनयाऽऽज्याहुत्या दूरमपसर मत्तः सकाशात्। विविधमनेकप्रकारं बाधते उपद्रवतीति विबाधस्तस्यामन्त्रणं हे विबाध। त्वमपि मा विबाधथाः मा बाधिष्यसे। किञ्च सुगं सुखेन गम्यते यस्मिन्। सुदुरोरधिकरणे गमेर्डप्रत्ययः। सुगमं पन्थानं मार्गं मे मम कुरु। येन पथा मा मां धनं द्रविणम् एष्यति आगमिष्यति। तदेवमाज्याहुत्या प्रीणितौ तावेव परिबाधविबाधावाशास्येते ॥७॥**

अपेहीत्यमुं पथि क्षेमकामो जपेत्। अक्षेमे पथ्यपेहीति जपेदित्युक्तत्वात् [ खा गृ ४. १. २१ ]।

अपेहि त्वं परिबाध इति। अनुष्टुबस्य च्छन्दः। मार्गविघातकारी देवो देवता।

हे परिबाध मार्गेऽस्मान् परितो बाधमान देव त्वमपेहि मार्गादपगच्छ। हे विबाध विविधं बाधमान सर्वथा मार्गे पीडयंस्त्वं मा विबाधथाः अस्मान् मा बाधस्व। यद्यपि तव पीडाकरणमेव स्वभावस्तथापि माऽस्माकं तथा कुर्वित्यर्थः। तदेवाह। मे मम पन्थानं गन्तव्यमार्गं सुगं सुखेन गन्तुं शक्यं कुरु। येन पथा मा मां धनमेष्यति तन्मार्गं सुगं कुर्विति ॥७॥

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् स्वाहा ॥८॥

[ ऋ स १०. १२१. १० ; वा स १०. २० ; काण्व स ३६. ३६। आप म २. २२. १६ ; गो गृ ४. ६. ६ ; खा गृ १. ३. १४ ; ४. १. १६ द्रः। जै गृ १. ५ ]

**पङ्क्तिरस्य च्छन्दः प्रजापतिर्देवताज्यहोम एव विनियोगः। शेषमुक्तार्थम्।**

**हे प्रजापते जगत्प्रभो यानि एतानि विश्वा विश्वानि सर्वाणि त्वत् त्वत्तः सकाशात् जातानि उत्पन्नानि जरायुजाण्डजस्वेदजोद्भिज्जानि ता तानि त्वत् अन्यः न परिबभूव न कश्चित् पालितवान् न चान्योऽधितिष्ठति। यत एवम्भूतो भवानतो वयं यत्कामाः यदिच्छाः सन्तः ते त्वदर्थं जुहुमः त्वामुद्दिश्याग्नावेनामाज्याहुतिं क्षिपामः नः अस्माकं तत् तस्य कामस्य फलं**

**भोग्यरूपम् अस्तु भवतु युष्मत्प्रसादेन। किञ्च वयं रयीणां धनानां पतयः स्वामिनः स्याम भवेम। प्रार्थनायां लिङ् ॥८॥**

प्रजापते न त्वदित्यस्य विशेषविनियोगो मूर्ध्नोऽधि म इत्यत्रैवोक्तः। सूत्रितं च [ खा गृ १. ३. १३, १४ ]—सर्वत्रोपरिष्टान्महाव्याहृतिभिः प्राजापत्यया चेति ॥

प्रजापते न त्वदेतान्यन्य इति। एषा प्राजापत्या।

हे प्रजापते प्रजानां पालक ब्रह्मन्। एतानि समाधेयानि निमित्तानि त्वद्व्यतिरिक्तानि न भवन्ति। प्राजापत्यान्येव। [1]यतस्त्वत् त्वत्तोऽन्यो[1] न कश्चिदस्ति अतो जातानि वैगुण्यानि यानि सन्ति ता तानि विश्वा सर्वाणि त्वं परि बभूव [2]परिभवितुं समर्थः[2]। किंच यत्कामा यत्-कामय मानास्ते त्वामुद्दिश्य जुहुमस्तत् फलं नोऽस्माकमस्तु। वयं स्याम पतयः स्वामिनः। केषाम् —रयीणां धनानाम्। स्वाहा हविर्दत्तमस्तु ॥८॥

यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशाम्।
यशः सत्यस्य भवामि भवामि यशसां यशः ॥९॥
पुनर्मा यन्तु देवता या मदपचक्रमुः।
महस्वन्तो महान्तो भवाम्यस्मिन् पात्रे हरिते सोमपृष्ठे ॥१०॥
रूप रूपं मे दिश प्रातरह्नस्य तेजसः।
अन्नमुग्रस्य प्राशिषमस्तु वै[3] मयि त्वयीदमस्तु त्वयि मयीदम् ॥११॥
यदिदं पश्यामि चक्षुषा त्वया दत्तं प्रभासया।
तेन मा भुङ्क्ष्व तेन भुक्षिषीय[4] तेन मा विश ॥१२॥
अहर्नो अत्यपीपरद्रात्रिर्नो अति पारयत्।
रात्रिर्नो अत्यपीपरदहर्नो अति पारयत् ॥१३॥

[ गो गृ ४. ६. १० ; खा गृ ४. १. २३ द्रः ]

1 D² & G यतस्त्वत्तोऽन्यो
2 D² reads कुर्वित्यर्थः and points out the defective character of the Mss. used.
3 C वयि
4 C भुत्तैषीय

निगदा एते यशोऽहमित्यारभ्य प्राङ्नावमित्यादित्यस्योपस्थाने विनियुक्ता आदित्यदेवताकाः। स एवादित्योऽनेन पञ्चर्चेन प्रार्थ्यते।

हे भगवन्नादित्य विद्याख्यातिरूपं यद् यशस्तदहं ब्राह्मणानां मध्ये भवामि तस्य स्वामी भवामि भवेयम्। लेट उत्तमपुरुषैकवचनमिदं न लटः। स हि लिङर्थे स्मर्यते [पा ३. ४. ७]। लिङर्थश्चात्र प्रार्थना। एवमुत्तरत्रापि योज्यम्। यद् विजय-पालन-प्रतिष्ठारूपं यशस्तेजस्तदहं राज्ञां क्षत्रियाणां मध्ये भवामि। यच्च कुसीदकृष्यादिजातप्रतिष्ठं यशस्तदहं विशां मध्ये भवामि। सत्यस्य महातपोरूपस्य यशः यशःस्वामी भवामि। यशसाम् अन्येषामप्युत्कर्षकराणां यशोऽहं भवामि। निमित्तभूतो भवामीत्यर्थः ॥९॥

या आदित्याद्या देवता मदपराधान्मत्सकाशात् अपचक्रमुरपक्रान्ताः। अस्मिन् पात्रे शरीरे विद्यातपोवृत्तसम्पन्ने हरिते सरसे सोमपृष्ठे सोमक्रता-वग्निष्टोमादौ पृष्ठे प्रधाने दक्षिणार्हत्वेन योऽहं वर्ते तं मा मां ताः पुनरायन्तु आगच्छन्तु। अनेन कर्मणा समानक्रियाभ्यासे पुनःशब्दः। तास्वागतासु सतीषु येनाहं महस्वन्तः तेजस्वी महान्तः महत्त्वगुणयुक्तो भवामि सम्पद्ये। महस्वन्तो महान्त इति सुपां सुपो भवन्तीत्युपसंख्यानादेकवचनस्य स्थाने छन्दसि बहुवचनम्[1] ॥१०॥

हे रूप रूपप्रकाशक भगवन्नादित्य प्रातरह्नस्य कालस्य तेजसः प्रकाशस्य यद् रूपं भास्वरं तत् मे मह्यं दिश—दिश अतिसर्जने—देहि। येनाहमुग्रस्य आदित्यस्य वृष्टिकारणस्य सम्बन्धे अन्नमदनीयं प्राशिषं प्रकर्षेणाश्नामि। छन्दसि लुङ्-लङ्-लिट इति [पा ३. ४. ६] लडर्थे लुङ्। किञ्च हे भगवन्नादित्य यन्मयि इदम् आहुतिरूपं द्रव्यं तत्त्वयि आप्यायकत्वेन अस्तु भवतु। यच्च त्वयि वृष्टिरूपं तन्मयि। यच्च त्वयि तन्मयीदमस्तु यच्च मयि तत्त्वयीति। औपसंख्यानिक इकारस्य ईकारः यथा सरसी[2] शयानमिति। आवयोर्द्रव्यं साधारणं भवत्वित्यर्थः ॥११॥

हे भगवन्नादित्य यदिदं द्रव्यजातं त्वया दत्तं चक्षुषाऽहं पश्यामि तत् प्रभासया। त्वदीयप्रभारूपेण तेन द्रव्यजातेन मा मां भुञ्ज पालय। तेन भुक्षिषीय तेन अहं भुक्षिषीय वृत्तिमान् भूयासम्। तेन प्रकारेण मा माम् आविश प्रविश त्वया सह ममैक्यं स्यादित्यर्थः ॥१२॥

1 *Mahābhāṣya—P.* 7. 1. 39.　　2 Does Guṇ. read त्वयी for त्वयि ?

**एवञ्च अहः दिवा नः अस्मान् अत्यपीपरत् अत्यर्थं तर्पितवत् योगप्राप्त्या। रात्रिः नः अतिपारयत् पालितवती क्षेमप्राप्त्या। बहुलं छन्दस्यमाङ्योगेऽपीति [पा ७. ४. ७५] अडागमाभावः एतदेव विपरीतम्। रात्रिः नः अत्यपीपरत्। अहः नः अतिपारयत् इति ॥१३॥**

यशोऽहमित्यादिको यजुःसंघातात्मको मन्त्रो यशस्कामस्यादित्योपस्थाने विनियुक्तः। सूत्रितं च [ खा गृ ४. १. २२ ]—यशोऽहमित्यादित्यमुपतिष्ठे यशस्काम इति ॥

यशोऽहं भवामीति। निगदत्वान्न च्छन्दोऽस्ति। आदित्यो देवता। प्रातरह्नस्येत्यमुं मध्यन्दिनापराह्णेषु यथार्थमूहेत [ खा गृ ४. १. २३ द्रः ]।

हे आदित्य ब्राह्मणानां यद्यशः [1]श्रुताध्ययनजन्यं तदहं भवामि। यशस्वी भूयासमित्यर्थः। लेडुत्तमैकवचनमेतन्न लट्। स च लिङर्थे विहितो लिङर्थे लेडिति [ पा ३. ४. ७ ] विधानात्। लिङर्थश्चात्र प्रार्थना। एवमुत्तरत्रापि[2] द्रष्टव्यम्। तथा राज्ञां क्षत्रियाणां यद्यशः [3]प्रजापालनयथार्थदण्डनादिजन्यं यद्यशस्तदहं भवामि। तथा सत्यस्य अभिवदितुर्यत्सत्यवचनमस्ति तस्य यद्यशस्तदहं भवामि। किंच यशसः सर्वविषयस्य यद्यशोऽस्ति तस्यापि यशो भवामि। यशःस्थानीयो भवामीत्यर्थः ॥६॥

पुनर्मा यन्त्विति।

या देवताश्चक्षुराद्यभिमानिन्यो मत् मत्तोऽपचक्रमुरपक्रान्ताः ताः पुनर्मां मामायन्त्वागच्छन्तु। [4]स्वं स्वम्[4] [5]अङ्गमधितिष्ठन्त्वित्यर्थः। किंचास्मिंस्त्वयि पात्रे देवैः पातव्ये हरिते हरितवर्णे सोमपृष्ठे। सोमशब्देनात्र मधूच्यते। [6]यद्वाहुतिद्वारा प्राप्तं सोमरूपं हविस्तत् पृष्ठे उपरि यस्य तथाविध आदित्ये मय्यनुग्रहयुक्ते सतीत्यर्थः। असौ वा आदित्यो देवमध्विति हि ब्राह्मणम्[7]। महस्वन्तस्तेजस्वान् महान्तो महान् गुणैः प्रवृद्धश्च भवामि। उभयत्र सुपां सुपो भवन्ति[8] इत्येकवचनस्थाने बहुवचनम् ॥१०॥

रूपं रूपमिति।

1 D² श्रुत्यध्ययन०

2 D² ०मुत्तरेष्वपि

3 B¹ प्रजापालनादिजन्यं ; D² & G प्रजापालनतया जन्यं

4 B¹ स्वस्य ; D² स्वयं

5 B¹ मार्गमधि० ; D² मामधि० ; G स्व गमयन्त्वित्यर्थः

6 D² यदा०

7 *Ch. Up.* 3. 1. 1

8 *Mahābhāṣya—P.* 7. 1. 39

किञ्च हे रूप। रूप्यत इति रूपः प्रकाशस्तद्वानादित्यः[1]। रूपं तावकं प्रकाशं मे मह्यं दिश देहि। कीदृशं रूपमिति तदुच्यते। अह्नस्याह्न उदयास्तमयमध्यमकालस्य सम्बन्धी यः प्रातःकालस्तस्मिन् काले यत्तव तेजोऽस्ति तस्य रूपमित्यर्थः। एवं सायमह्नस्येत्यपि पक्षे योज्यम्। [2]किञ्चोग्रस्योद्गीर्णबलस्य सूर्यस्यान्नं वृष्टिद्वारेण निष्पन्नं प्राशिषं प्रकर्षेणाश्नामि। किञ्च हे आदित्य यद्धविर्मय्यस्ति वै। वा इति प्रसिद्धौ। दातव्यमस्ति तदिदं त्वयि हुतं [3]सद् वर्ततामित्यर्थः। तथा त्वयि यद् वृष्ट्यादि फलमस्ति तन्मय्यस्ति अस्त्वित्यर्थः। केचनास्त्विवति पठन्ति[4] ॥११॥

यदिदमिति तदुच्यते। यदिदमन्नादिरूपं फलं चक्षुषा पश्यामि। यद्वा पृथगेव वाक्यम्। यदिदं रूपं त्वयि चक्षुषा पश्यामि तदपि मय्यस्त्वित्यर्थः। किञ्च त्वया[5] दत्तं फलं त्वमेव प्रभासय[6] लोके प्रसिद्धं कुरु। तेन त्वद्दत्तेनान्नेन मा मां भुङ्ग भोजय। भोग-पर्यवसायि कुर्वित्यर्थः। तेन धनेन[7] भुक्षिषीय भुक्षीय। तेन भोगसाधनेन फलेन मा मां विश तेजोरूपेण प्रविश ॥१२॥

किञ्चाहर्दिवा नोऽस्मानत्यपीपरदत्यन्तं पालयतु। भोगान् दत्त्वा रक्षत्वित्यर्थः[8]। तथा रात्रिर्नोऽस्मानतिपारयत् स्वामतिक्रामयित्वा समापयतु[9]। स्वस्यां संभवदुपद्रवपरिहारेण दिवं प्रापयत्वित्यर्थः। तथोत्तरवाक्यद्वयमुक्तवैपरीत्येन[10] योजनीयम्। एवमभिधानेनाहनि रात्रौ च दुःखाभावेन सुखं प्रार्थितं भवति ॥१३॥

**आदित्यनावमारोक्षं पूर्णामपरिवादिनीम्[11]।**
**अच्छिद्रां पारयिष्णुं[12] शतारित्रां स्वस्तये ॥१४॥**

[ अ स १७. १. २५—०नावमारुक्षः—द्रः। गो गृ ४. ६. १२ ; खा गृ ४. १. २५ द्रः ]

**ओं नम आदित्याय नम आदित्याय नम आदित्याय ॥१५॥**

1 D² तद्वन्नादित्य
2 D² किंचोग्रस्योग्रवर्णबलस्य
3 D² अस्तु तद् त्वयि ; G तद्
4 Guṇaviṣṇu reads अस्तु.
5 B¹ & M² मया
6 D² प्रभासया
7 D² अन्नेन
8 M¹ & M² रक्षयत्वित्यर्थः
9 D² & G पारयतु
10 D² ०द्वयेऽप्युक्तवैपरीत्येन
11 D², S¹ & S² ०मपरिपादिनीम्. But Sāyaṇa in D² explains परिपाथिनीम्.
12 Sāyaṇa पारयिष्णुं ; Cf. *T. S.* 1. 5. 11.

उद्यन्तं त्वादित्यानूदियासं प्रतितिष्ठन्तं त्वादित्यानु प्रति तिष्ठासम् ॥१६॥

[ गो गृ ४. ६. १२ ; खा गृ ४. १. २५ द्रः ]

अस्यानुष्टुप् छन्दः। शेषमुक्तार्थम्। य आदित्यो नौरिव लोकानां सन्तारकत्वेन तामहम् आरोक्षम् आरूढोऽस्मि। किम्भूताम्—पूर्णाम् आप्यायनीम्। अपरिवादिनीम् परिवादः पैशुन्यम् तद् यस्यां नास्ति सा तथोक्ता। अपरिपातिनीमिति वा पाठः। इतश्चेतश्च या न पातयतीत्यर्थः। अच्छिद्रां निर्विवरां घनाम्। पारयिष्णवीं भक्तिप्रह्वाणां संसारसमुद्रपारप्रापणीम्। पार तीर कर्मसमाप्तावित्यस्माच्चुरादिण्यन्तात् णेश्छन्दसीति [ पा ३. २. १३७ ] ताच्छीलक इष्णुच्। शतारित्राम् अरित्रं नावः प्रेरणदण्डहलमिति लोकानां प्रसिद्धम्। अरित्रशतत्राणसमर्थाम्। किमर्थम्—स्वस्तये अविनाशाय ॥१४॥

ओम् आत्मा आदित्यः। नम आदित्यायेत्येषा स्तुतिरादित्यस्यैव। अभ्यासो भूयांसमर्थं गमयति ॥१५॥

यजुरिदं स्वस्त्ययने विनियुक्तमादित्यदेवताकम्। हे भगवन्नादित्य उद्यन्तं त्वा त्वाम् अनु त्वत्प्रसादेनाहमपि उदियासम्। उदयं विद्याकीर्तिग्रामपुत्रपशुलक्षणं प्राप्नुयामित्युदयप्रार्थना प्रातः। प्रतितिष्ठन्तं त्वा त्वाम् अनु आदित्य प्रतितिष्ठासम् पूर्वोक्तैर्विद्यादिभिः प्रतिष्ठां गच्छेयमिति प्रतिष्ठाप्रार्थना सायम् ॥१६॥

शुभप्राप्तिकाम[1] आदित्यनावमिति सन्ध्यामुपतिष्ठेत्[2]। सूत्रितं च [ खा गृ ४. १. २४ ]—आदित्यनावमिति सन्ध्योपस्थानं स्वस्त्ययनमिति ॥ अहरहरेतदनुष्ठेयम्। उद्यन्तं त्वेति पूर्वां प्रतितिष्ठन्तं त्वेति पश्चिमामिति [ खा गृ ४. १. २५ ] विभागः।

पाठस्तु—आदित्यनावमारोक्षमिति। स्वस्तय इत्यन्तोऽनुष्टुप्छन्दस्कोऽशः। शिष्टो यजुरंशः। आदित्यो देवता।

1 M[1] & M[2] सुखप्राप्तिकामः 2 B[1], M[1] & M[2] सन्ध्यायामुप०

अहमादित्यनावमादित्याख्यां नावं महासंसारसागरतारिकामारोक्ष्यमारूढोऽस्मि। कीदृशीम्—पूर्णां काम्यैर्द्रव्यैर्भरिताम्। तथा परिपाथिनीम्[1]। पाथ उदकम्। परितः प्राप्तोदकाम्। न ह्यसत्युदके नौका गच्छति। किञ्चाच्छिद्रां छेदरहिताम्। पारयिष्णुं पारप्रापणशीलाम्। शतारित्रां बह्वरित्रोपेताम्। किमर्थमिति। स्वस्तये—[2]अविनाशनामैतत्[2]—क्षेमाय सुखेन संसारमुत्तरीतुमित्यर्थः[3] ॥१४॥

ओमित्योङ्काराय [4]ओङ्कारप्रतिपाद्याय परमात्मने। नम इति शेषः। अथ तस्य परमात्मनोऽधिष्ठानभूतां देवतां नमस्करोति। आदित्यायादितेः पुत्राय सूर्याय भगवते नमः। यद्वा ओं प्रणवप्रतिपाद्यायादित्यायादित्याभिमानिने नमः। त्रिरावृत्तिरादरार्था। त्रिरभिधाने सति[5] हि देवा विश्वसन्ति त्रिषत्या हि देवा इति श्रुतेः[6] ॥१५॥

हे आदित्य उद्यन्तमुदयं गच्छन्तं त्वानु त्वामनुसृत्य उदियासम् उन्नतिं विद्याकीर्तिपुत्रपश्वादिसमृद्धिरूपां प्राप्नुयाम्। तथा प्रतितिष्ठन्तं प्रतिष्ठां प्राप्नुवन्तं त्वामनु प्रतितिष्ठासं प्रतिष्ठितो भूयासम्। उक्तैरेव विद्यादिभिरविचलितपदो[7] भूयासम् ॥१६॥

## भलाय स्वाहा ॥१७॥

[ गो गृ ४. ६. १४ ; खा गृ ४. २. २ ]

**यजुरिदं होमे विनियुक्तं भलदेवताकम् ॥१७॥**

## भल्लाय स्वाहा ॥१८॥

[ गो गृ ४. ६. १४ ; खा गृ ४. २. ३ ]

**इदं तु पूर्ववदिति ॥१८॥**

**इति भट्ट-गुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये**
**द्वितीयप्रपाठके पञ्चमः खण्डः ॥**

1 Guṇaviṣṇu reads अपरिवादिनीम्, and mentions the variant अपरिपातिनीम्.
2 D² अविनाशाय ममैतत but see *Nir.* 3. 21.
3 D² ०मुत्तरितुं योग्यमित्यर्थः
4 D² प्रणवप्रति० ; G प्रतिपाद्याय
5 D² & G omit it.
6 *T. Br.* 3. 2. 3. 8 ; *Ṣaḍ. Br.* 1.1
7 B¹ ०रविचलितो ; D² ०रविचलबलो

भलायेतियजुर्द्वयेन संचिताभिवृद्धिकामोऽपरपक्षादि सायंकाले जुहुयात्। तथा च सूत्रितम् [ खा गृ ४. २. १, २, ५ ]—अर्धमासव्रती तामिस्रादौ ब्राह्मणानाशयेद्व्रीहिकंसौदनम्। तस्य कणानपरासु सन्ध्यासु प्रत्यग् ग्रामात्[1] स्थण्डिलमुपलिप्य भलायेति जुहुयाद्भल्लायेति च। आचितं शतं भवतीति॥ अपरपक्षे प्रतिपदि व्रीह्योदनं कंसेन भोजयेद्ब्राह्मणान्। उक्तव्रीहिकणान् [2]सायंसन्ध्यास्वारभ्यागामितामिस्रादेर्भलायेत्याभ्यां जुहुयात्।

भलाय भल्लायेति। अनयोः सूर्यो देवता।

भलभल्लौ परिभाषणहिंसादानेषु। परिभाष्यते सर्वैः स्तूयत इति वा हिनस्ति तम इति वा आदत्ते रसानिति वा भलभल्लशब्दौ सूर्ये व्युत्पन्नौ। तस्मै स्वाहा स्वाहुतमस्तु॥१७, १८॥

॥*॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणमन्त्रपर्वणि द्वितीये प्रपाठके पञ्चमः खण्डः ॥*॥

---

1 B¹, M¹ & M² add निष्क्रम्य. 2 D² सायंसन्ध्यास्वपरस्यागामि०

## द्वितीयप्रपाठके षष्ठः खण्डः

वास्तोस्पते प्रतिजानीह्यस्मान्त्स्वावेशोऽनमीवो भवा नः।
[1]यत्ते महे[1] प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥१॥

[ ऋ स ७. ५४. १ ; तै स ३. ४. १०. १ ; आ गृ २. ६. ६ ; शा गृ २. १४. ५ ; पा गृ ३. ४. ७ ; आप म २. १५. १८—यत्त्वेमहे। गो गृ ४. ७. ३३ ; खा गृ ४. २. १८ द्र: ]

वसिष्ठोऽस्य द्रष्टा त्रिष्टुप् छन्द इन्द्रो देवता नवगृहप्रवेशे पायसचरुहोमे विनियोगः।

वास्तु गृहम्। वसेस्तुन्नगारे णिच्चेति [ उ १. ७० ] व्युत्पादितत्वाद् वसतेर्निवासकर्मण इति निर्वचनाच्च [ निरु १०. १६ ]। तस्य पतिः स्वामी वास्तोस्पतिः। विभाषा स्वसृपत्योरिति [ पा ६. ३. २४ ] षष्ठ्या अलुक्। षष्ठ्याः पतिपुत्रेत्यादिना [ पा ८. ३. ५३ ] षष्ठीसकारस्य पतिशब्दे परतः षत्वम्। हे वास्तोष्पते इन्द्र। प्रतिजानीहि त्वम् अस्मान् नः धनधान्यपुत्रपश्वाद्यर्थिनः। अनेन कर्मणा स्वावेशः शोभनप्रवेशो नः अस्माकं भव अस्मान् प्रविशेत्यर्थः। अनमीवः च भव। न विद्यते अमीवो व्याधिर्येन प्रविष्टेन यस्मिन् वा सोऽनमीवः। भवा इति छान्दसं दीर्घत्वम्। किञ्च यत् ते[2] तव सम्बन्धि किञ्चिदहं महे[2] पूजयामि तत् प्रति नः अस्माकं सम्बन्धे जुषस्व भजस्व। तेन प्रीतिं कुर्वित्यर्थः। एवं च प्रीणितः सन् नः अस्माकं द्विपदे मानुषाय चतुष्पदे पशवे शं सुखरूपो भव। वास्तोस्पत इत्यनेनेन्द्रो योगः प्रार्थ्यते शं नो भवेत्यनेन क्षेमम्। द्विपदे चतुष्पदे इति क्रियाग्रहणमपि कर्तव्यमिति [ काशिका—पा १. ४. ३२ ] चतुर्थी ॥१॥

अथ वास्तुहोमाङ्गभूता मन्त्रा उच्यन्ते ॥ गौरे भूमिभागे ब्राह्मणो लोहिते क्षत्रिय इत्यादिनोक्ते [ खा गृ ४. २. ६ ] गृहवासिनामभ्युदयसाधनवास्तुहोमे कृष्णाया

1 Various Vedic texts यत्त्वेमहे 2 Sāyaṇa त्वा and ईमहे

[1]गोः श्वेतवर्णाया अजाया वा वसया[1] मिश्रितः [2]पायसः केवलो वा वास्तुहोमार्थः[2] कर्तव्यः। तत्र वास्तोष्पत इति होममन्त्रः। तथा च सूत्रितम् [ खा गृ ४. २. १८ ]—मध्ये वेश्मनो वसां पायसं चाज्येन मिश्रमष्टगृहीतं जुहुयाद्वास्तोष्पत इतीति ॥

पाठस्तु—वास्तोष्पत इति। वसिष्ठ ऋषिः। त्रिष्टुप् छन्दः। इन्द्रो देवता।

हे वास्तोष्पते वास्तु गृहाधिष्ठानं क्षेत्रं तस्य पालयितः एतन्नामक देव। विभाषा स्वसृपत्योः [ पा ६. ३. २४ ] इति षष्ठ्या अलुक्। षष्ठ्याः पतिपुत्रेत्यादिना [ पा ८. ३. ५३ ] षत्वम्। अस्माननुष्ठातॄन् गृहवासिनो वा प्रतिजानीहि। प्रतिज्ञां कुरु रक्षिष्यामीति। अथवा प्रत्येकमस्मान् रक्ष्या एवेत्यवबुध्यस्व। किंच नोऽस्माकं स्वावेशः सुष्ठु आ सर्वतः प्रवेशयुक्तो भव। तथाऽनमीवो रोगरहितोऽव्याधितो भव। अस्माकं शोभननिवेशनं रोगाभावं च कुर्वित्यर्थः। किञ्च त्वा[3] त्वां यत् फलम् [4]ईमहे याचामहे[4] तन्नोऽस्मभ्यं जुषस्व। प्रयच्छेत्यर्थः। किञ्च नोऽस्माकं द्विपदे पुत्रभृत्यादिकाय शं सुखकरो भव। तथा चतुष्पदे पश्वादौ शं भव ॥१॥

हये राके सिनीवालि सिनीवालि पृथुष्टुके।
सुभद्रे पथ्ये रेवति पथा नो यश आ वह स्वाहा ॥२॥
ये यन्ति प्राञ्चः पन्थानो य उ चोत्तरत आययुः।
ये चेमे सर्वे पन्थानस्तेभिर्नो यश आ वह स्वाहा ॥३॥
[5]यथा यन्ति प्रपदो[5] यथा मासा अहर्जरम्।
एवं मा श्रीधातारः समव यन्तु सर्वतः स्वाहा ॥४॥
यथा समुद्रं स्रवन्तीः समवयन्ति दिशो दिशः।
एवं मा सखायो ब्रह्मचारिणः समव यन्तु दिशो दिशः स्वाहा ॥५

[ गो गृ ४. ८. २ ; खा गृ ३. २. ८ द्रः ]

1 D[2] गोः श्वेतवर्णाजवसया ; M[1] & M[2] गोश्ववर्णाजाया वा वसाया

2 B[1] & G पायसो होमार्थः ; D[2] omits वास्तुहोमार्थः.

3 D[2] [ ते ]

4 D[2] and G read महे for ईमहे, and omit याचामहे which Sāyaṇa has used not only here but also in his *Bhāṣya* on *Ṛv*. 7. 54. 1.

5 Cf. *T. Ār*. 7. 4. 3 ; *T. Up*. 1. 4. 3.

हये राके इत्येवमादेर्मन्त्रचतुष्कस्यानुष्टुप् छन्दो राकादयो देवताः स्वस्त्ययनकामस्य श्रावण्याग्रहायणीकर्मणि विनियोगः।

हये हे देवि राके।—राकानुमतिसंज्ञं च पौर्णमासीद्वयं विदुः।
राका सम्पूर्णचन्द्रा स्यात् कलोनाऽनुमतिः स्मृता॥
हे सिनीवालि।— सिनीवाली कुहूश्चैवाऽमावास्याद्वितयं विदुः।
दृष्टचन्द्रा सिनीवाली कुहूर्नष्टक्षपाकरा॥

पृथुष्टुकं जघनं केशपाशो वा यस्याः सा पृथुष्टुका। तस्या आमन्त्रणं हे पृथुष्टुके। सुभद्रे कल्याणकारिणि। पथ्ये पथोऽनपेते चक्षुषोः प्रियदर्शने। रेवति अनेकभीमरूपा रेवत्यः। पथा दृष्टादृष्टाविरुद्धेन मार्गेण। नः अस्मान् यशः सुकृतम् आवह आनय। आवहेति प्रत्येकं राकादिभिः संबध्यते॥२॥

ये[1] पन्थानः प्राञ्चः प्रागुगताः यन्ति गच्छन्ति ये चोत्तरत आययुः आगतवन्तः। उ पादपूरणे। ये च इमे सर्वे पन्थानः तेभिः तैः नः यशः आवह स्वाहा॥३॥

यथा सर्वतः सर्वाभ्यो दिग्भ्यः प्रपदो मुहूर्ताः। कुतः—त्रिंशत् पदा न्यक्रमीदिति[2] लिङ्गात्। दृढपादाग्राः प्राणिनो वा आयन्ति आगच्छन्ति। अहर्दिनं जरयति परिणमयतीति आदित्यः। तं च यथा मासा मार्गशिरःप्रभृतयः आयन्ति एवम् तथा श्रीधातारः ईश्वरा मा मां समवयन्तु द्रव्यप्रदानेन मदभिमुखा भवन्त्वित्यर्थः॥४॥

योगं प्रार्थ्येदानीं क्षेमं प्रार्थयितुमाह—यथा समुद्रं स्रवन्तीः स्रवन्त्यः। वा छन्दसि [ पा ६. १. १०६ ] जसि पक्षे पूर्वसवर्णः। समवयन्ति मिलन्ति। दिशो दिशः सर्वाभ्यो दिग्भ्यः। एवं मा मां ब्रह्मचारिणः शिष्याः सखायः मम धनस्य रक्षकाः समवयन्तु। दिशो दिशः स्वाहा॥५॥

हये राक इत्यादिमन्त्रचतुष्टयस्य पूर्वोक्त एव होमे विनियोगः। सूत्रितं च [ खा गृ ४. २. १६ ]—याश्च परा इति॥ तथा श्रावण्यामित्यादिनोक्ते [ खा गृ ३. २. १ द्रः ] सर्पबलावेषां विनियोगः। सूत्रितं च [ खा गृ ३. २. ८ ]—अक्षतानादाय प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य जुहुयादञ्जलिना हये राक इतीति॥

मन्त्रचतुष्टयस्यानुष्टुप् छन्दो राकासिनीवाल्यौ देवते। तत्र प्रथमः हये राके सिनीवालीति।

1 B adds यं. 2 *Ṛv.* 6. 59. 6

हये हे इत्यर्थः। हे राके पौर्णमासीदेवते। हे सिनीवालि अमावास्यादेवते। तथा चोक्तम्

राका चानुमतिश्चेति पौर्णमासी द्विधा मता।
सिनीवाली कुहूश्चेति अमावास्या द्विधा मता॥
राका सम्पूर्णचन्द्रा स्यात् कलोनाऽनुमतिः स्मृता।
दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूरिति॥ इति।

सिनीवालाशब्दो यास्केन निरुक्तः—सिनमन्नं भवति। सिनाति भूतानि। वालं पर्व वृणोतेस्तस्मिन्नन्नवती वालिनी वा। वालेनेवास्यामणुत्वाच्चन्द्रमाः सेवितव्यो भवतीति वा इति[1]। पृथुष्टुके पृथुजघने पृथुकेशे वा। एतत् सिनीवालीविशेषणम्। सिनीवालीति पुनः पाठस्तद्गतगुणातिशयख्यापनार्थः[2]। सैव विशेष्यते। सुभद्रे शोभनकल्याणे[3] पथ्ये पथि हिते रेवति बहुधनोपेते। पथा श्रेयःप्रापणमार्गेण नोऽस्मभ्यं यशोऽन्नं कीर्तिं वा आवह प्रापय। स्वाहा हविर्दत्तमस्तु। यद्वा राकासिनीवालीवत् सुभद्रादयोऽपि पृथगेव देवता अवगन्तव्याः। पृथुष्टुक इत्येतत्तु सिनीवालि पृथुष्टुके या देवानामित्यत्र[4] [5]विशेषणत्वेन दृष्टत्वादत्रापि[5] सिनीवालीविशेषणम्। देवतान्तरपक्षे पथा न इत्यादि प्रत्येकमभिसंबध्यते॥२॥

अथ द्वितीयः—ये यन्ति प्राञ्च इति। द्वितीयपाद एकाक्षराधिक्येऽपि न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्[6] इत्युक्तत्वान्नानुष्टुब्व्याहतिः[7]। अस्य चोत्तरयोश्चानुष्टुप् छन्दः सिनीवाली देवता।

ये पन्थानो मार्गाः प्राञ्चः प्राङ्मुखा यन्ति प्रवृत्ताः। तथा य उ—उ चेत्यप्यर्थे—येऽपि चोत्तरत उत्तरां दिशमुपक्रम्यायुयुरागताः। ये चेमे पुरतो दृश्यमाना अनुक्ता दक्षिणतः प्रत्यक्चश्च प्रवृत्ताः सर्वे पन्थानः सन्ति तेभिस्तैः पथिभिर्नोऽस्मभ्यं हे सिनीवालि यश आवह। स्वाहेति गतम्॥३॥

[8]अथ तृतीयः—यथा यन्ति प्रपद इति।

हे सिनीवालि लोके प्रपदः प्रकृष्टपादाग्रा ज्यागामिनो यथा यन्ति शीघ्रमागच्छन्ति

1 *Nir.* 11. 31—*v. l.* सेतव्यो for सेवितव्यो
2 D² & G ०ख्यापनपरः; M¹ & M² ०स्तद्गुणातिशयख्यापनार्थः।
3 D² & G ०कन्यके
4 *Ṛv.* 2. 32. 6
5 D² & G विशेषणत्वादत्रापि
6 *Ait. Br.* 1. 6
7 D² & G ०न्नानुष्टुपछन्दोहानिः
8 B¹ & G omit this *Bhāṣya* of the Mantra, and D² puts here Guṇ's Bhāṣya within brackets.

स्वाभीष्टविषयं प्रति। यथा वा मासा अहर्जरम्। अहानि जीर्यन्त्यस्मिन्नित्यहर्जरः[1] संवत्सरस्तं यथा मासा यन्त्येवं मा मां श्रीधातारः ऐश्वर्यकर्तारो धनिकाः सर्वतः समवयन्तु। धनं दातुमित्यर्थः। स्वाहेति गतम् ॥४॥

अथ चतुर्थः—यथा समुद्रमिति।

यथा समुद्रं सरितां नाथं स्रवन्तीः स्रवन्त्यो बहुप्रवाहा नद्यो दश दिश आकाशात् प्रवृत्ताः समवयन्ति सम्यगभिमुखं गच्छन्ति। एवं मा मां सखायः [2]समानख्यानाः सखिभूता हितकारिणः शुश्रूषका ब्रह्मचारिणो दश दिशः समवयन्तु संमुखमागच्छन्तु ॥५॥

## वसुवन एधि वसुवन एधि वसुवन एधि ॥६॥

[ गो गृ ४. ८. ३ ; खा गृ ३. २. ६ ]

**यजुरिदं त्रिपाद्गायत्रं वा।**

**पुनरपि योगार्थमाह—वसु धनं वनतीति वन षण सम्भक्तावित्यतः स्तम्बशकृतोरिन् [ पा ३. २. २४ ] इत्यत इनित्यनुवर्तमाने छन्दसि वनसनरक्षिमथाम् [ पा ३. २. २७ ] इतीन्प्रत्यये वसुवनिर्धनभाक् द्रव्यपतिः। तस्यामन्त्रणम्। हे वसुवने मामभि त्वमेधि एहि आगच्छ। वर्णव्यत्ययेन हकारस्य धकारः। मदभिमुखो वा भवेत्यर्थः। त्रिर्गणनमत्यादरार्थम् ॥६॥**

वसुवन एधीत्यस्य वास्तुहोमे विनियोगः[3]। पूर्वोक्त एव सर्पबलौ हये राक इति होमानन्तरभाविनि जपे विनियोगः[4]। सूत्रितं च [ खा गृ ३. २. ६ ]—वसुवन एधीति जपेत्त्रिस्त्रिः प्रतिदिशमवान्तरदेशेषु चेति ॥ होमं समाप्योत्तरतोऽग्नेः प्राचीं गत्वा प्रागुपक्रमं प्रदक्षिणमग्नेरष्टसु दिक्षु तिष्ठन्नग्न्यभिमुखस्त्रिस्त्रिर्ब्रूयादित्यर्थः।

हे वसुवने—वन षण संभक्तौ—धनसंभक्तः[5] अधिकधनप्रभो। एध्येह्यागच्छ। व्यत्ययेन धकारः। इनित्यनुवृत्तौ छन्दसि वनसनरक्षिमथाम् [ पा ३. २. २७ ] इतीन्प्रत्ययः। उक्तमन्त्रसाध्यं वास्तुकर्म पूर्वप्रोष्ठपदे नक्षत्रे कार्यम्। एवं कृते [6]बहुपशुधान्यहिरण्मयमायुष्मत्पुरुषं [7]वीरसूसुभगाविधवास्त्रीकं शिवं पुण्यं वास्तु भवति। मन्त्रस्य त्रिरावृत्तिर्दार्ढ्याय ॥६॥

1 Sāyaṇa explains यथा मासा अहर्जरम् in *T. Ār.* 7. 4. 3 as यथा च मासाश्चैत्रवैशाखादयः सर्वेऽप्यहर्जरं संवत्सरमायन्ति। अहानि…जीर्णान्यन्तर्भवन्ति यस्मिन् संवत्सरे सोऽयमहर्जरः।

2 B¹, D² & G समानाख्यानाः

3 M¹ & M² add उक्तः.

4 D² विनियुक्तः

5 D² omits धनसंभक्तः.

6 D² पशुधान्यं हिरण्मय० ; G बहुपशुधान्यं हिरण्मय०

7 G, M¹ & M² वीरसूः सुभगा०

वशङ्गमौ देवयानौ युवं स्थो यथा युवयोः सर्वाणि भूतानि
वशमायन्त्येवं ममासौ वशमेतु स्वाहा ॥७॥
शङ्खश्च मन आयुश्च देवयानौ युवं स्थो यथा युवयोः
सर्वाणि भूतानि वशमायन्त्येवं ममासौ वशमेतु स्वाहा ॥८॥

[ गो गृ ४. ८. ७ ; खा गृ ४. २. २४ द्रः ]

यजुरिदम्। देवयानौ देवते। उत्तरे च मन्त्रे। वशं स्वाधीनं सर्वं गम्यत इति वशंगमौ। व्रीहियवौ देवयानौ देवप्रापकौ आहुतिद्वारेण। युवं स्थः। प्रथमायाश्च द्विवचने भाषायामिति [पा ७. २. ८८] वचनाच्छन्दसि युष्मद आत्वं नास्ति। युवां भवथ इत्यर्थः। यथा युवयोः सर्वाणि भूतानि स्थावराणि जङ्गमानि च वशमायन्ति युष्मदधीनत्वेन। एवं ममासौ देवदत्त आत्मना धनेन च वशमेतु मदायत्तो भवत्वित्यर्थः। स्वाहेति हविःप्रदानम् ॥७॥

यजुरिदं पूर्वमुत्तरञ्च। चन्द्रार्कौ देवते। पृथक् पृथग्व्रीहियवहोमे विनियोगः।

शङ्खः शशाङ्कः कान्तिसामान्यात्तदाकृतित्वाद्वा[1]। आयुरादित्यस्तन्निमित्तत्वाज्जीवितस्य। शीतोष्णवर्षैरोषधीः[2] पाचयति व्रीह्यादीनादाय[3] स्थितः। एवं स्थितिहेतुत्वमुभयोः। मन्यते जायते येन प्रकाशरूपेण। यस्मिन् वा सति याति[4] प्रकाशं पदार्थजातम्। स शङ्खो मन आयुश्च। मनः—करणाधिकरणयोश्च [पा ३. ३. ११७] इत्यधिकृत्य पुंसि संज्ञायां घः प्रायेण [पा ३. ३. ११८] इति मन्यतेर्घप्रत्ययः। द्यावापृथिवी अन्तरेव समाहिते। उभावग्निश्च वायुश्च सूर्याचन्द्रमसाविति[5]। देवयानौ रविशशिनौ। रविशशिनोर्देवयानत्वं यदाहुरर्यम्णः पन्था इत्येष वाव देवयानः पन्था इति श्रुतेः[6]। युवं युवाम् स्थः भवथः। यथा सादृश्ये। युवयोः सर्वाणि भूतानि वशमायन्ति युष्मदधीनानि भवन्ति एवं मम असौ ईश्वरः सर्वैः वशम् एतु स्वाहा ॥८॥

1 Sāyaṇa's alternative explanation refers to a similar idea.
2 A & V शीतोष्णवार्षौषधीः
3 A & B व्रीह्यादिना य
4 Mss. omit याति.
5 *Ch. Up.* 8. 1. 3
6 *Tāṇḍya Br.* 25. 12. 3

वशंगमावित्येतौ वशीकरणहोमे विनियुक्तौ । सूत्रितं च [ खा गृ ४. २. २४ ]—वशंगमावित्येताभ्यामाहुती[1] जुहुयात् । यमिच्छेद्वशमायान्तं तस्य नाम गृहीत्वासाविति वशी हास्य भवतीति ॥ मम विष्णुशर्मा वशमेत्विति तन्नाम गृहीत्वेत्यर्थः । उभावपि यजुर्मन्त्रौ चन्द्रसूर्यदेवताकौ । आद्यस्य व्रीहियवौ वा ।

तत्र प्रथमः—वशङ्गमाविति ।

हे व्रीहियवौ युवं युवां वशंगमौ स्थोऽवशानां शत्रादीनां वशमधीनतां गमयितारौ भवथः । तथा देवयानौ देवप्रापकौ स्थः । आभ्यां द्रव्याभ्यामाहुतिद्वारा देवप्राप्तेः । यथेत्यादि स्पष्टम् । व्रीह्याद्यन्नप्रदानेन प्राणिनां वशप्राप्तिर्लोकसिद्धा[2] । स्वाहेति गतार्थम् । चन्द्रसूर्यदेवतापक्षेऽपि वशंगमयितृत्वं जगन्निर्वाहकत्वात् प्रसिद्धम् । देवप्राप्तिमार्गरूपत्वं च प्राणिनां कर्मानुरोधेन दक्षिणोत्तरमार्गयोर्गन्तव्यदेशप्रापणात् ॥७॥

अथ द्वितीयः—शङ्खश्चेति ।

हे शङ्ख । शं सुखं खन्यते अवदीर्यते[3] लभ्यत इति शङ्खः चन्द्रमाः । यद्वा वर्णसादृश्याद्वर्तुलत्वाद्वा शङ्ख इति चन्द्र उच्यते[4] । तथा मनः सर्वैर्मननीयः । आयुः प्राणिनां जीवननिमित्तः सूर्यः । परस्परापेक्षया चशब्दः । तौ युवं युवां देवयानौ स्थः पूर्वमन्त्रोक्तरीत्या देवप्राप्तिमार्गौ भवथः । यद्यपि सूर्यस्यैव देवयानत्वं न चन्द्रमसस्तथापि तत्साहचर्यात्तस्मिन् प्रयुज्यत उपचारात् । शिष्टं स्पष्टम् ॥८॥

**आकूतीं देवीं मनसा प्रपद्ये यज्ञस्य मातरं सुहवा मे अस्तु ।**
**यस्यास्त एकमक्षरं परं सहस्रा अयुतं च शाखास्तस्यै**
**वाचे निहवे जुहोम्या मा वरो गच्छतु श्रीर्यशश्च स्वाहा ॥९॥[5]**

[ अ स १६. ४. २ ; तै ब्रा २. ५. ३. २ द्रः । गो गृ ४. ८. १० ; खा गृ ४. ३. १ द्रः ]

**ईश्वरप्रसादकरणे विनियोगः । वागूदेवता ।**

**आकूती शरीराधिष्ठात्री देवता । देवी दानादिगुणयुक्ता । तामहं मनसा प्रपद्ये प्रपन्नोऽस्मि । यज्ञस्य मातरं यज्ञस्य निर्मात्रीम् । सुहवा**

1 B[1], M[1] & M[2] ०माहुतीः ; G ०माहुतीन् ; *Kh. Gr.* Mysore Ed. ०माहुति

2 D[2] & G ०प्राप्तिः सिद्धा

3 B[1] विदाद्यते ; D[2] & G विदार्यते.

4 See Guṇ's explanation which is almost identical.

5 Sāyaṇa Mss. omit Mantras 9 and 10, but C and other Brāhmaṇa Mss. enumerate them.

शोभनाह्वाना मे मम अस्तु भवतु। सैव प्रत्यक्षीकृत्योच्यते। यस्यास्ते तव एकमक्षरमोमित्येतद्ब्रह्म वाङ्मयमूलम्। परं प्रकृष्टम्। सहस्रा बहुप्रकाराः। अयुतं च दशसहस्रसंख्याकाश्च शाखाः। तस्यै एवंभूतायै वाचे निह्वे आह्वाने सति जुहोमि त्वदुद्देशेनाग्नौ हविः प्रक्षिपामि। मा मां वरः अभिप्रेतं फलम् आगच्छतु। श्रीर्यशश्च आगच्छतु। स्वाहा ॥९॥

इदमहमिमं विश्वकर्माणं श्रीवत्समभि जुहोमि स्वाहा ॥१०॥

[ गो गृ ४. ८. १६ ; खा गृ ४. ३. ७ द्रः ]

निगदोऽयं पण्यलाभकामस्य होमे विनियुक्तो विश्वकर्मदेवताकः।

इमं विश्वकर्माणं विश्वस्योत्पत्तिपालनविनाशाः कर्म व्यापारो यस्य स विश्वकर्मा जगतः स्रष्टा तं विश्वकर्माणम्। श्रीवत्सं श्रीः वत्स इव मातुर्नित्यं लग्ना यस्य तत्तथोक्तम्। अभि आभिमुख्येन गत्वा प्रसाद्याहं पण्यलाभकाम इदं द्रव्यं जुहोमि त्यजामि स्वाहा ॥१०॥

पूर्णहोमं यशसे जुहोमि योऽस्मै जुहोति वरमस्मै ददाति।
वरं वृणे यशसा भामि लोके स्वाहा ॥११॥

[ गो गृ ४. ८. २३ ; खा गृ ४. ३. ८ द्रः ]

विराडस्य च्छन्दः। यशस्कामस्य यजनीयप्रयोगे विनियोगः। इन्द्रो देवता।

पूर्णहोमं पूर्णस्रुवेणाग्नौ द्रव्यत्यागम् अहं होता जुहोमि[1] निष्पादयामि। किमर्थम्—यशसे कीर्त्यर्थम्। यशोहोमस्य मन्त्रदृगेव स्तुतिमाह—यः कश्चिद् अस्मै यशसे जुहोति वरम् अभिप्रेतफलं यशः अस्मै होत्रे होमस्य कर्त्रे ददाति। यत एवमतो वरं फलं वृणे यशोऽहं प्रार्थये। तदाह—यशसा कीर्त्या इह लोके अहं भामि—भा दीप्तौ—दीप्ये तेजस्वी भवामीति यावत् ॥११॥

पूर्णहोममित्यनेन मन्त्रेण यजनीयेऽग्नौ यशस्कामो जुहुयात्। यद्वा यत्र यत्र यष्टव्यमस्ति तत्र तत्रानेन जुहुयाद्यशस्कामः। सूत्रितं च [ खा गृ ४. ३. ८ ]—पूर्णहोमं यजनीये जुहुयादिति ॥ मन्त्रप्रतिपादक इतिशब्दाभावो मन्त्रलिङ्गानुस्मरणार्थः। अतो यशस्काम-स्यायमिति गम्यते।

1 Mss. प्रपद्ये

पाठस्तु—पूर्णहोमं यशस इति। विराडस्य च्छन्दः। यद्यपि मन्त्रे देवताविशेषो नास्ति तथापि यशस इन्द्राधीनत्वादिन्द्रोऽस्य देवता।

पूर्णहोममाज्यपूरितस्रुवेण कर्तव्यं होमं जुहोमि। अत्र धात्वर्थोऽनुवादः। करोमीत्यर्थः। किमर्थम्—यशसे कीर्त्यवाप्तये। योऽहमस्मा इन्द्राय जुहोमि[1] आहुतिं प्रक्षिपामि अस्मै मह्यमिन्द्रो वरं ददाति यशोरूपफलं प्रयच्छति। केचिज्जुहोतीति पठन्ति[1]। तस्मिन् पक्षे लौकिकोक्तिः। यस्माज्जुहोम्यतो वरं वृणे यशोरूपं वरं लभे तेन यशसा वरेण लोके भामि दीप्तो भवामि। स्वाहेति पूर्ववत् ॥११॥

**इन्द्रामवदात्तमो वः परस्तादहं वो ज्योतिर्मामभ्येत**
**सर्वे स्वाहा ॥१२॥**

[ गो गृ ४. ८. २४ ; खा गृ ४. ३. ६ द्रः ]

**गायत्री च्छन्दः। सहायकामस्य होमे विनियोगः। सहायो देवता। इन्द्राम् इन्द्राणामीश्वराणां मध्ये यः कश्चिदवदात् विशुद्धधनकर्मा ईश्वरः ते सर्वे यूयं मामभ्येत मामेवाभिमुख्येनागच्छत। अभ्यागमने प्रयोजनमाह— यतस्तमः अज्ञानं वः युष्माकं शास्त्रविषयाद् यदागतं तस्य अहं वः युष्माकं परस्तात्[2] अग्रतः ज्योतिः तेजोभूतः स्फोटयिता[3] ॥१२॥**

इन्द्रामवदादिति सहायकामो जुहुयात्। इन्द्रामवदादिति सहायकाम इति हि सूत्रितम् [ खा गृ ४. ३. ६ ]।

इन्द्रामवदात्तम इति। गायत्र्यस्य च्छन्दः। तमो व इति प्रथमपादान्तो ज्योतिरिति द्वितीयपादान्तः। द्विपदा त्रिष्टुब् वा। सूर्यो देवता।

इन्द्रामिन्द्राणां क्षित्यादिलोकाधीश्वराणामग्न्यादीनां मध्य आदित्योऽवदात् मार्गानभिज्ञान् प्रत्यवदत्। किमित्युच्यते। हे मनुष्याः सहायकामिनो वो युष्माकं परस्तादुपरि पुरोभागे तम आवारकोऽन्धकारः तिष्ठतीति शेषः। अतः अहमेव वो युष्माकं [4]ज्योतिर्दीपवत् प्रकाशकोऽस्मि[4]। अतः सर्वप्रकाशकामिनो यूयं मामभ्येत मामेवाभिमुखं गच्छत। अहं मार्गप्रकाशको भवामि। स्वाहेति गतम् ॥१२॥

**अन्नं वा एकच्छन्दस्यमन्नं ह्येकं भूतेभ्यश्छन्दयति स्वाहा ॥१३॥**

[ गो गृ ४. ६. ४ ; खा गृ ४. ३. १० द्रः ]

1 Guṇaviṣṇu reads जुहोति.
2 Mss. पुरस्तात्
3 A स्फाटयति
4 D² ०र्दीप्तिवत् प्रकाशोऽस्मि

गायत्रं छन्दः। पुरुषाधिपत्यकामस्य चतुष्पथेऽग्नावादित्याभिमुखस्याज्यहोमे विनियोगः। आदित्यो देवता।

अन्नं वै किल एकच्छन्दस्यम् एकः प्रधानः [1]त्रय्यात्मकत्वेनासावादित्यश्छन्द एकच्छन्दाः [2]तत्र भवमेकच्छन्दस्यम्[2]। किं तत्—अन्नम्। हि यस्मात् एकं भूतेभ्यः भूतानां तृप्त्यर्थं छन्दयति प्रवर्तते। एतदुक्तं भवति—यथादित्यप्रभवत्वेन रश्मिजालं वृष्ट्यम्भसा लोकान् [3]छन्दयत्यावृणोति तथाऽन्नमपि ममादित्यप्रसादाद्बहु भवतु। येनाहं पुरुषेष्वधिपतिर्भवामीति ॥१३॥

श्रीर्वा एषा यत् सत्वानो विरोचनो मयि सत्त्वमव
दधातु स्वाहा ॥१४॥

[ गो गृ ४. ६. ४ ; खा गृ ४. ३. १० द्रः ]

यजुरिदं विरोचनदैवतम्। विनियोगः पूर्ववत्।

श्रीः वै किल एषा प्रत्यक्षा। यत् सत्वानः—वन षण सम्भक्तौ—ये सम्भक्तारः ईश्वरास्तेषु मध्ये विरोचन आदित्यः मयि कर्तरि सत्त्वम् सहस्रकृत्व आधिपत्यम् अवदधातु स्थापयतु स्वाहा ॥१४॥

अन्नकामोऽन्नं वा इति श्रीर्वा इत्याभ्यां चतुष्पथ आज्यं जुहुयात्। सूत्रितं च ( खा गृ ४. ३. १० ]—अष्टरात्रोपोषितः[4] प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य चतुष्पथे समिध्याग्निमौदुम्बर इध्मः स्यात् स्रुवचमसौ च जुहुयादन्नं वा इति श्रीर्वा इतीति ॥ चशब्दात् स्रुवचमसावप्यौदुम्बरौ कार्यौ। चमस आज्यधारणार्थः[5]।

तत्र प्रथमः—अन्नं वा एकच्छन्दस्यमिति। अयमुत्तरश्चोभौ यजुर्मन्त्रावन्नदेवताकौ।

एकच्छन्दस्यम्। छन्दयतीति छन्दः[6]। छादनाच्छन्दस्त्वं श्रुतौ प्रसिद्धम्। छादयन्ति [7]ह वा एनं[7] छन्दांसीति श्रुतिः[8]। एकं च तच्छन्दश्च एकच्छन्दः[9]। तदर्हमेकच्छन्दस्यम्। जगतामन्यनिरपेक्षया[10] छादनार्हमित्यर्थः। तदन्नं वा अन्नमेव। न ह्यन्नादृते किञ्चिदाच्छा-

1 B स्वाध्यायात्मकत्वेना०
2 B & V तत्प्रभव०
3 B & V छादयत्या०
4 D² adds अपरं.
5 See Rudra on *Kh. Gṛ.*
6 See *Daivata Br.* 3. 19.
7 D² & G विवावेन
8 *Ait. Ār.* 2. 1. 6
9 D² & G omit एकच्छन्दः.
10 D² ०निरपेक्षा ; G ०निरपेक्षक

दकं रक्षकमस्ति। अन्नं ह्येकम्। हीति प्रसिद्धौ। अन्नमेकमेव खलु भूतेभ्यः प्राणिभ्योऽस्मत्पुत्रभृत्यादिभ्यश्छादयत्यपावृणोति[1] रक्षतीत्यर्थः ॥१३॥

अथ द्वितीयः—श्रीर्वा एषेति।

सत्वानः प्राणिनः पुत्रादयः सामर्थ्यान्निवसन्ति। यत् एषा श्रीर्वै। वै इति लोकप्रसिद्धिद्योतनार्थः। लोके खलु प्रभूतपुत्राद्युपेतं श्रामानिति व्यवहरन्ति। एषेत्यत्र स्त्रीत्वैकत्वे श्रीशब्दापेक्षे। अतो न विरोधः। विरोचनो विशेषेण रोचमानो व्रीह्यादिः[2] सत्त्वं पुत्रादिकं सामर्थ्यं वा मयि प्रयोक्तर्यवदधातु। [3]केचनानयोर्मन्त्रयोरादित्यो देवतेति ब्रुवते। तस्मिन् पक्ष एकच्छन्दस्यमित्यस्यायमर्थः। एकस्य एव तेजसाच्छादक एकच्छन्दः। तत्र भवमन्नमेकच्छन्दस्यम्। तथा द्वितीयमन्त्रे विरोचनशब्देन विशेषेण रोचमान आदित्य उच्यते[3]। शिष्टं समानम् ॥१४॥

## अन्नस्य घृतमेव रसस्तेजःसम्पत्कामो जुहोमि स्वाहा ॥१५॥

[ गो गृ ४. ६. ५ ; खा गृ ४. ३. ११ द्रः ]

**बृहतीयमन्नदैवता। विनियोगः पूर्ववत्।**

**अन्नस्य घृतमेव रसः सारः। तथा च यद् घृतं तद्भोजनमिति जनप्रवादः। तेजःसम्पत् राज्याधिपत्यम् तत् कामयमानो घृतम् अहं जुहोमि स्वाहा ॥१५॥**

अन्नस्येत्यनेनाधिपत्यकामो जुहुयात्। तथा च सूत्रम् [ खा गृ ४. ३. ११, १२ ]—ग्रामे तृतीयामन्नस्येत्याधिपत्यं प्राप्नोतीति ॥ तृतीयाम् आहुतिमित्यर्थः। अस्मिन्नपि कर्मणि पूर्वोक्ताभ्यां मन्त्राभ्यां चतुष्पथे हुत्वा तृतीयामाहुतिमन्नस्येत्यनेन ग्रामे जुहुयादित्यर्थः।

अन्नस्य घृतमिति। यजुर्मन्त्रोऽयं तेजोदेवताकः।

यतः अन्नस्य घृतमेव रसः सारः। अतो घृतोपेतेनान्नेन सारभूतेन घृतेन वा तेजःसम्पत्कामः शरीरकान्तिरूपां सम्पदं कामयमानो जुहोमि। स्वाहेति स्पष्टम् ॥१५॥

## क्षुधे स्वाहा ॥१६॥

[ तै स ७. १. १७. १ ; गो गृ ४. ६. १५ ; खा गृ ४. ३. १५ ]

## क्षुत्पिपासाभ्यां स्वाहा ॥१७॥

[ गो गृ ४. ६. १५ ; खा गृ ४. ३. १५ ]

**यजुर्द्वयमिदं वृत्त्यविच्छित्तिकामस्य सायम्प्रातः कुक्कुसहोमे विनियुक्तं क्षुत्पिपासादेवताकम् ॥१७॥**

1 D² & G ०भृत्यादिभ्यश्छन्दयत्यपा०

2 D² & G add मयि.

3 The reference suits well to Guṇaviṣṇu's explanation above.

उपतापिनीषु गोष्ठे पायसं जुहुयादित्युक्ते [ खा गृ ४. ३. १३ ] गोव्याधिनिर्हरणार्थे कर्मण्यप्युक्तास्त्रयो मन्त्रा अवगन्तव्याः। यतः पूर्वस्मिन् सूत्रेऽन्नं वा इति [1]'द्वाभ्यामित्येव' निर्देशमकृत्वाऽन्नं वा श्रीर्वा इतीत्थं पृथङ्निर्देशो विषयबाहुल्यप्रदर्शनाय। अतोऽत्रापि प्रयोगेऽन्नं वा इत्यादि त्रयोऽनुकृष्यन्ते। एवमुत्तरस्मिन्नप्यद्धेमे पथि वस्त्रदशानां ग्रन्थिं कुर्यात् सहायिनां च स्वस्त्ययनानीति सूत्रोक्ते [ खा गृ ४. ३. १४ ] मार्गसहायित्वसाधनहोमेऽपि सूत्रे पृथङ्निर्देशबलादेव त्रयो मन्त्रा [2]अनुकृष्यन्त इति[2] अवगन्तव्यम्[3]।

सञ्चितगवादिधनस्य बाहुल्यकामः क्षुध इत्यादिमन्त्रद्वयेनाज्येनाहुतिसहस्रं जुहुयात्। तथा च सूत्रितम् [ खा गृ ४. ३. १५ ]—क्षुधे स्वाहेत्येताभ्यामाहुतिसहस्रं जुहुयादाचितसहस्रकाम इति॥ यावति द्रव्ये सति द्रव्यसञ्चयवानयमिति लौकिका आहुस्तत्सहस्रगुणितमस्य फलमित्यर्थः[4]। अथाभ्यामेव कामनाभेदेन विनियोगः सूत्रितः [ खा गृ ४. ३. १६, १७ ]। वत्समिथुनयोः पुरीषेण पशुकामोऽविमिथुनयोः क्षुद्रपशुकामः। हरितगोमयेन सायंप्रातर्जुहुयान्नास्य वृत्तिः क्षीयत इति॥

पाठस्तु—क्षुधे स्वाहा। क्षुत्पिपासाभ्यां स्वाहा। यजुष्ट्वादनयोर्न[5] च्छन्दोऽस्ति। क्षुत्पिपासे देवते। अर्थो निगदसिद्धः[6] ॥१६, १७॥

मा भैषीर्न मरिष्यसि जरदष्टिर्भविष्यसि।
रसं विषस्य नाविदमुग्रम्फेनमिवास्यम्[7] ॥१८॥

[ गो गृ ४. ६. १६ ; खा गृ ४. ४. १ द्रः ]

**छन्दोऽस्यानुष्टुप्। विषवता दष्टमद्भिरभ्युक्ष्य जपेदित्यत्रार्थे विनियोगः। सर्पो देवता।**

**मा भैषीः मा भेष्यसि। न मरिष्यसि जीविष्यसि। जरदष्टिः जराव्याप्तिर्भविष्यसि। विषमस्यास्तीति विषः विषवान् सर्पः। अर्श आदिभ्योऽजिति [ पा ५. २. १२७ ] मत्वर्थीयोऽच्। तस्य रसं निर्यासम्। आस्यं मुखम्। उग्रम् क्रूरम् अन्तकालजम् फेनमिव अहं नाविदं नोपलब्धवान् एतन्मन्त्रप्रभावेण ॥१८॥**

मा भैषीरित्ययं विषनिर्हरणे विनियुक्तः। तथा च सूत्रितम् [ खा गृ ४. ४. १ ]—विषवता दष्टमद्भिरभ्युक्षञ्जपेन्मा भैषीरितीति॥ विषनाशोऽस्य फलम्।

1 D² & G द्वाभ्यामितिवत्
2 D² omits it.
3 D² अवगन्तव्याः
4 Rudra on *Kh. Gṛ.* 4.3.15
5 D² यजुष्ट्वादाभ्यां न
6 D² निगमसिद्धः
7 D² & Sāyaṇa Mss. ०मुग्रस्फेन०, explaining स् as छान्दस.

मा भैषीरिति । अनुष्टुप् छन्दः । विषवान् सर्पादिर्देवता ।

हे विषदष्ट त्वं मा भैषीर्भीतिं मा कार्षीः । भीतिनिमित्ताभावं दर्शयति । न मरिष्यसि मरणं न प्राप्स्यसि । किंतु जरदष्टिर्जरापर्यन्तं व्याप्तो भविष्यसि । यतो विषस्य विषवतः सर्पादेः रसं सारं सामर्थ्यं नाविदं न लब्धवानस्मि । वीर्यं न दृश्यत इत्यर्थः । अर्श आदिभ्योऽजिति [ पा ५. २. १२७ ] मत्वर्थेऽच् । अथवा विषस्यैव रसं सामर्थ्यं नाविदम्[1] । [2]उग्रम्फेनमिवोद्गीर्णफेनमास्यमिव । तद्यथा नाविदं तद्वत् । [3]मकारोऽयं छान्दसः । यतो [4]मुखं फेनिलं[4] नाविदमतो विषरसं नाविदम् । अत एव न मरिष्यसि मा भैषीरित्यभिप्रायः ॥१८॥

## तुर गोपाय मा नाथ गोपाय मा ।
## अशस्तिभ्यो अरातिभ्यः स्वस्त्ययनमसि ॥१९॥

[ गो गृ ४. ६. १७ ; खा गृ ४. ४. २ द्रः ]

**यजुरिदं स्वस्त्ययनकामस्य स्नातकस्य स्वापकाले शय्यासमीपे वैणवदण्डस्थापने विनियुक्तं दण्डदेवताकम् ।**

**हे तुर दण्ड नाथ स्वामिन् मा मां गोपाय—गुपू रक्षणे—पुनः पुनर्मां रक्षेत्यर्थः । केभ्यः—अशस्तिभ्यः अप्रशस्तेभ्यः क्रूरकर्मभ्यः । अरातिभ्यः शत्रुभ्यः । यतस्त्वं स्वस्त्ययनमसि । स्वस्तीत्यविनाशनाम[5] । तस्याविनाशस्य त्वमयनं प्रापणमसि भवसि ॥१९॥**

**इति भट्ट-गुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये**
**द्वितीयप्रपाठके षष्ठः खण्डः ॥**

तुर गोपायेत्यनेन स्नातको भयनिवारणार्थं वैणवं दण्डं समीपे निदध्यात् । तथा च सूत्रितम् [ खा गृ ४. ४. २ ]—स्नातकः संविशन् वैणवं दण्डमुपनिदध्यात्तुर गोपायेति स्वस्त्ययनमिति ॥ दण्डं स्वापकाले शय्यासमीपे निदध्यादित्यर्थः । अस्योपद्रवनिवृत्तिः फलम् ।

तुर गोपाय मेति—यजुरिदं दण्डदेवताकम् । हे तुर । गमनविघ्नकारिणस्त्वरयतीति[6] तुरः [7]दण्डः । हे तादृश[7] नाथ स्वामिन् मा मां गोपाय रक्ष । तथैवाशस्तिभ्योऽप्रशस्तेभ्योऽरातिभ्यः सुखमप्रयच्छद्भ्यो बाधकारिभ्यो मा मां गोपाय । हे दण्ड यतस्त्वं[8] स्वस्त्ययनं क्षेमप्रापणमसि । अनेनास्मिन् क्षेमसंभावना प्रदर्शिता भवति ॥१६॥

॥*॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणमन्त्रपर्वणि द्वितीये प्रपाठके षष्ठः खण्डः ॥*॥

1 M[1] adds विधिनानस्मै न दृश्यत इत्यर्थः ; M[2] adds बिलधिनानस्मै न॰
2 D[2] उग्रस्फेनमिवोद्गीर्ण॰ ; G, M[1] & M[2] उग्रस्फेनं यत उद्गीर्ण॰
3 D[2], G, M[1] & M[2] सकारोऽयं
4 D[2] मुखफेनं, G मुखफेनिलं
5 *Nir.* 3. 21
6 D[2] ॰स्त्वारयतीति
7 D[2] हे तादृश दण्ड
8 D[2] यशस्त्वं

हतस्ते अत्रिणा[1] क्रिमिर्हतस्ते जमदग्निना ।
गोतमेन [2]तिनोकृतोऽत्रैव त्वा क्रिमे ब्रह्मवद्यमवद्यम् ॥१॥

[ गो गृ ४. ६. १६ ; खा गृ ४. ४. ३ द्र: ]

**बृहत्यस्य च्छन्दः। पश्चादेभक्ष्यमाणस्य क्रिमिपातने विनियोगः। अत्र्यादयो देवताः। क्रिमयोऽस्य सन्तीति क्रिमिमान्। तस्यामन्त्रणम्—हे क्रिमिमन्[3]। हतः हिंसितः। ते तव। अत्रिणा महर्षिणा जमदग्निना च गोतमेन महर्षिणा तिनीकृतः तनूकृतः हिंसितः। अत्र एतस्मिन्नेव स्थाने त्वा त्वाम्। हे क्रिमे ब्रह्मवद्यम् अनेन मन्त्रेण परिजप्यम् अवद्यम्[4] मह्यं[5] निष्प्रयोजनत्वात् ॥१॥**

अथ हतस्त इत्यादीनां सर्वप्राणिसामान्ये क्रिमिनिर्हरणे विनियोगः। तथा च सूत्रम् [ खा गृ ४. ४. ३ ]—हतस्त इति क्रिमिमन्तं देशमद्भिरभ्युत्तज्जपेदिति ॥ क्रिमिनाशोऽस्य फलम्। अथैषामेव पशुक्रिमिनिर्हरणे च विनियोगमाह सूत्रकारः [ खा गृ ४. ४. ४ ]—पशूनां चेदपराह्णे सीतालोष्टमाहृत्य तस्य प्रातः पांसुभिः प्रतिष्किरञ्जपेदिति ॥

तत्र प्रथमः—हतस्त इति। बृहत्यस्य च्छन्दः। अत्र्यादयो देवताः।

हे क्रिमिहतप्राणिन् ते तवान्त्रघाती[6] क्रिमिरत्रिणा पापस्य भक्षकेणैव तन्नामकेन महर्षिणा हतो घातितः। एवमुत्तरवाक्येऽपि योज्यम्। किञ्च हे प्राणिन् ते तवान्त्रघाती[6] क्रिमिर्गोतमेन महर्षिणा [7]तिनीकृतस्तनूकृतो न शिष्यत इत्यर्थः[7]। किञ्च हे क्रिमे त्वा त्वाम्। अत्रैवान्त्रव्रणे[8] घातयामीति शेषः। ब्रह्मवद्यं ब्रह्मणो मन्त्रस्य वद्यं जप्यम्। अवद्यमजप्यम्। स्वत एवात्र्यादिभिर्हतत्वान्मन्त्रजपो निरर्थक इत्यर्थः। [9]यद्वा वद्यार्हस्य[9] महतो मन्त्रस्य तुच्छक्रिमिहनने विनियुक्तत्वादित्यभिप्रायः ॥१॥

भरद्वाजस्य मन्त्रेण सं तिनोमि[10] क्रिमे त्वा ॥२॥

[ गो गृ ४. ६. १६ ; खा गृ ४. ४. ३ द्र: ]

**द्विपादियं गायत्री। शेषमुक्तार्थम्। संतिनोमि सम्यक् तनूकरोमि। आमूलात् पातयामि ॥२॥**

अथ द्वितीयः—भरद्वाजस्येति। द्विपदा गायत्री च्छन्दो भरद्वाजो देवता। स्पष्टोऽर्थः ॥२॥

1 V कृमि० ; see Index of Words.
2 D[2] तृणीकृतो०
3 क्रिमिमन् does not occur in the Mantra text.
4 B अनवद्यं
5 B ब्रह्म
6 D[2] तवात्मघाती
7 D[2] तृणीकृतः नाशित इत्यर्थः ; G तनीकृतः नाशित इत्यर्थः
8 D[2] अत्रैव सव्रणे
9 D[2] यद्वावद्यार्थो
10 D[2] तृणोमि

क्रिमिं ह [1]वक्क्तोदिनं क्रिमिमान्त्वानुचारिणम् ।
क्रिमिं द्विशीर्षमर्जुनं द्विशीर्षं ह चतुर्हनुम् ॥३॥

[ गो गृ ४. ६. १६ ; खा गृ ४. ४. ३ द्रः ]

अनुष्टुबस्य च्छन्दः । शेषमुक्तार्थम् ।

वक्क्तोदिनमिति वक्क्रं वक्क्रेण वा तोदितुं व्यथयितुं शीलं यस्य क्रिमेः तं तथोक्तम् । आन्त्वानुचारिणम् आ अन्त्राण्यनुचरितुमन्त्राभ्यन्तरं प्रवेष्टुं शीलं यस्य तं तथोक्तम् । द्विशीर्षं द्वे शिरसी यस्य तं द्विशीर्षम् । शीर्षंश्छन्दसीति [ पा ६. १. ६० ] शिरसः शीर्षभावः । अर्जुनं शुक्लवर्णम् । द्विशीर्षं चतुर्हनुम् । हनुर्वेदनैकदेशः । चतस्रो हनवो यस्य स चतुर्हनुः । अतस्तमेवमनेकप्रकारमपि संतिनोमीति सम्बन्धः ॥३॥

अथ तृतीयः—क्रिमिं हेति । अनुष्टुबस्य च्छन्दः । [2]क्रिमिघातिनो देवताः[2] ।

वक्रतोदिनम् । वक्रं तिर्यगितस्ततस्तोदितु[3] शीलं यस्य तं क्रिमिं ह तादृशं क्रिमिमपि[4] हन्मीति शेषः । तथान्त्वानुचारिणमपि द्विशीर्षम् । शीर्षंश्छन्दसि [ पा ६. १. ६० ] इति शिरःशब्दस्य शीर्षन्नादेशः । उभयत्र शिरोयुक्तमित्यर्थः । अर्जुनं धवलवर्णं क्रिमिम् । तथा द्विशीर्षं [5]चतुर्हनुं च हन्मीति शेषः । यद्यपि द्विशीर्षमित्यनेनैव हनुसंज्ञवद्नैकदेशचतुष्टयमप्युक्तं भवति तथापि तस्यातिशयेन घातकत्वप्रदर्शनार्थमुक्तम् । चतुर्हनुमित्यस्य विशेषणाय द्विशीर्षमित्यस्य पुनर्वचनम् ॥३॥

हतः क्रिमीणां क्षुद्रको हता माता हतः पिता ।
अथैषां भिन्नकः कुम्भो य एषां विषधानकः ॥४॥[6]

[ तै आ ४. ३६. १ द्रः । गो गृ ४. ६. १६ ; खा गृ ४. ४. ३ द्रः ]

अनुष्टुबियम् । शेषं पूर्ववत् ।

हतः हिंसितः क्रिमीणां सम्बन्धी क्षुद्रकः अनस्थिः । हता माता हतः पिता । अथानन्तरम् एषां क्रिमीणां यो विषधानकः विषाधारः कुम्भः घटः आलयः स मया भिन्नकः भग्नः भिन्नः । आश्रयविनाशात्तेऽपि सर्वे समूला विनष्टा इत्यर्थः ॥४॥

1 D² वक्रतोदिनं
2 D² ०घातको देवता
3 Sāyaṇa explains वक्रतोदिनं.
4 D² क्रमिं ह
5 D² & G omit चतुर्हनुं.
6 Cf. *Av.* 2. 32. 4-6.

अथ चतुर्थः—हतः क्रिमीणामिति । छन्दोदेवते पूर्ववत् ।

क्रिमीणां मध्ये क्षुद्रकः । कः अल्पार्थे । क्षुद्रः क्रिमिजातिर्हतो मन्त्रेण घातितः । [1]क्रिमीणां शिशुर्वा हतः । तथा तेषां माता उत्पादयित्री हता । तथा पिता पालक उत्पादको हतः । एवं सर्वनाशः । पुनरप्युत्पत्त्यभावायोक्तः[2] । किञ्चैषां कुम्भो भिन्नकः । कुत्सितार्थे कः । भिन्नो भग्नः [3]सन् हतः हतोऽभूत्[3] । कुम्भो विशेष्यते । यः कुम्भ एषां क्रिमीणां विषधानको विषस्य धापको धारको वा ॥४॥

## क्रिमिमिन्द्रस्य बाहुभ्यामवाञ्चं पातयामसि ॥५॥

[ गो गृ ४. ६. १६ ; खा गृ ४. ४. ३ द्र: ]

**द्विपाद् गायत्री । इन्द्रो देवता ।**

**क्रिमिम् अवाञ्चम् अधोमुखम् इन्द्रस्य बाहुभ्यां पातयामसि वयं पातयामः । इदन्तो मसीति [ पा ७. १. ४६ ] मस इदन्तता ॥५॥**

अथ पञ्चमः—क्रिमिमिन्द्रस्येति । अस्यापि द्विपदा गायत्री च्छन्दः । इन्द्रो देवता । अवाञ्चमवाङ्मुखं क्रिमिमिन्द्रस्य बाहुभ्यां पातयामसि पातयामः ॥५॥

## हताः क्रिमयः साशातिकाः सनीलमक्षिकाः ॥६॥

[ गो गृ ४. ६. १६ ; खा गृ ४. ४. ३ द्र: ]

**द्विपाद् गायत्रीयम् । इन्द्रो देवता ।**

**तदेवं प्राणिनामुपघातकारिणः सर्वे क्रिमयः साशातिकाः सहाशातिकया आमक्रिमिजालेन सनीलमक्षिकाः सह नीलमक्षिकाभिः हताः विनाशिता इति ॥६॥**

**इति भट्ट-गुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये**

**द्वितीयप्रपाठके सप्तमः खण्डः ॥**

अथ षष्ठः—हताः क्रिमय इति । छन्दोदेवते पूर्ववत् ।

साशातिकाः आ समन्ताच्छातयन्तीत्याशातिकाः ताभिः सह वर्तन्त इति साशातिकाः । क्रिमयो हता नष्टा अभवन् । सनीलमक्षिका नीलमक्षिकाभिर्विशिष्टाः क्रिमयोऽपि हताः । एवमविशेषेण [4]सर्वक्रिमीणां हननं प्रार्थितं भवति ॥६॥

॥*॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणमन्त्रपर्वणि

द्वितीये प्रपाठके सप्तमः खण्डः ॥*॥

1 D[2] & G add सः before it.
2 D[2] पुनरप्युद्भवायोग्याः
3 D[2] omits it.
4 D[2] omits सर्व.

## द्वितीयप्रपाठके अष्टमः खण्डः

एवं काम्यान्युक्तानि। अथेदानीमर्हणीयविधिरुच्यते। षडर्घ्यार्हा भवन्त्याचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रियोऽतिथिरिति[1]। तेषां च गृहागतानां यजमान उत्तरत आलम्भनार्थं गां बध्नीयात्। तथा चोक्तम्[2]—गोघ्नोऽतिथिः। तेषामनेनैव मन्त्रेणोपतिष्ठेरन्।

अर्हणा पुत्रवाससा धेनुरभवद् यमे।
सा नः पयस्वती दुहा[3] उत्तरामुत्तरां समाम् ॥१॥

[ गो गृ ४. १०. १ द्रः ]

अस्य वसिष्ठ ऋषिश्छन्दोऽनुष्टुबर्हणीया गौर्देवता धेनुबन्धने विनियोगः।

येयम् अर्हणा पूजासम्पादिनी पुत्रवाससा पुत्रानुगामिनी यमे यजमाने धेनुः अभवत् बभूव सा नः पयस्वती सती दुहा दुग्धाम् मनोरथान् पूरयतु। उत्तरामुत्तरां समाम् प्रतिवर्षम् वर्षशतं यावदित्यर्थः ॥१॥

अथ स्नातकादिपूजारूपमधुपर्काङ्गभूता मन्त्रा व्याख्यायन्ते ॥ तत्रार्हणेत्यनेन गोदानसमय आनीयमानां गामुपतिष्ठते।

पाठस्तु—अर्हणेति। अनुष्टुबस्य च्छन्दः। गौर्देवता।[4]

अर्हणा पूजासाधना या[5] धेनुः क्षीरादिना प्रीणयित्री गौरुषोरूपा पुत्रवाससा पुत्ररूपस्य लोकस्य वासयित्री सती यमे नियमयितर्यादित्ये धेनुः प्रीणयित्र्यभवत्। यद्वा पुत्राणां वासनं पुत्रवासः। सर्वस्य प्रीणनेच्छयेत्यर्थः। सा धेनुः[6] नोऽस्माकं पयस्वती बहुपयोयुक्ता सती दुहा दुग्धाम्[7]। कस्मिन् काले। उत्तरामुत्तरां समामुत्तरोत्तरे संवत्सरेऽनवच्छेदेन ॥१॥

इदमहमिमां पद्यां विराजमन्नाद्यायाधितिष्ठामि[8] ॥२॥

[ गो गृ ४. १०. २ ; खा गृ ४. ४. ५ द्रः ]

यजुरिदम्। उपविशन्नर्हणीयो जपेदित्यत्रार्थे विनियुक्तं विराड्देवताकम्।

1 See *G. Gṛ.* 4. 10. 23.
2 See *Kāśikā* on *P.* 3. 4. 73.
3 See notes on 1. 8. 7; 2. 2. 1; 2. 2. 14.
4 Rudra on *Kh. Gṛ.* 4. 4. 5 prescribes *viniyoga* of this Mantra in connection with the Madhuparka: अर्हणेति जपेन्मन्त्रलिङ्गात्.
5 D² omits या.
6 D² & G omit धेनुः.
7 D² & G दुग्धा
8 In D² the text reads अधितिष्ठामि, but the Bhāṣya explains अभि०.

**इदम् आसनम् इमां च पद्यां पाद्वतीं विराजं विविधं राजमानां शोभनां श्रियम् अधितिष्ठामि आक्रामामि। किमर्थम्—अन्नाद्याय अन्नाद्यर्थम् ॥२॥**

इदमहमिति यजुर्मधुपर्कप्रतिग्रहे विनियुक्तम्। तथा च सूत्रम् [खा गृ ४. ४. ५]—मधुपर्कं प्रतिग्रहीष्यन्निदमहमिमामिति प्रतितिष्ठञ्जपेदिति ॥

इदमहमिति। यजुष्ट्वात्र च्छन्दः। भूर्देवता।

अहमिदमभितिष्ठामि[1]। इदमिति क्रियाविशेषणमत [2]एकत्वं कर्मत्वं नपुंसकत्वञ्च[2]। [3]एतदधिष्ठानरूपं कर्म करोमीत्यर्थः[3]। अभीत्ययमधीत्यर्थे। अधिष्ठानस्य विषय उच्यते। इमां प्रसिद्धां पद्यां [4]पदार्हां विराजं विशेषेण राजमानां पृथिवीं दधिमधुघृतसंमेलनरूपस्य सत्कारस्य मधुपर्कस्योदासीनां करोमि। अभ्युत्थितो भवामीत्यर्थः ॥२॥

या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः।
ता मह्यमस्मिन्नासनेऽच्छिद्राः शर्म यच्छत ॥३॥

[ऋ स १०. ९७. १८; वा स १२. ९२. द्रः। गो गृ ४. १०. ६; खा गृ ४. ४. ९ द्रः]

या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु।
ता मह्यमस्मिन् पादयोरच्छिद्राः शर्म यच्छत ॥४॥

[ऋ स १०. ९७. १९; वा स १२. ९३ द्रः। गो गृ ४. १०. ७;
खा गृ ४. ४. १० द्रः]

**अनुष्टुबस्य मन्त्रद्वयस्य च्छन्दः। विष्टरद्वयस्यासनपादयोरधस्ताद्दाने विनियोगः। ओषध्यो देवताः।**

**हे ओषधीः। ओषध्यः फलपाकान्ताः। याः यूयं सोमराज्ञीः। सोमश्चन्द्रमा राजा अधिपतिर्यासां ताः सोमराज्ञीः। अत्र दीर्घाज्जसि च वा छन्दसीति [पा ६. १. १०५, १०६] जसि पूर्वसवर्णदीर्घत्वम्। बह्वीः बह्व्यो बहुप्रकाराः शतविचक्षणाः बहुशः प्रजाजीवने निपुणाः ताः अच्छिद्राः निरन्तराः अस्मिन् आसने उपविशते मह्यं मे शर्म सुखं यच्छत दत्त। प्रार्थनायां लोण्मध्यमपुरुषस्य बहुवचनम् ॥**

**याः ओषधीः पृथिवीम् अनु पृथिव्यां विष्ठिताः विविधं स्थिताः। ताः अस्मिन् द्वितीये विष्टरे पादयोः अधस्ताद्ददते मह्यं शर्म यच्छतेति सम्बन्धः ॥४॥**

1 See the preceding foot-note.
2 D[2] एव नपुंसकत्वञ्च
3 D[2] omits it.
4 D[2] पदार्थां

या ओषधीरित्ययं विष्टरारोहणे[1] विनियुक्तः। सूत्रितं च [ खा गृ ४. ४. ६ ]—उदञ्चं विष्टरमास्तीर्य या ओषधीरित्यध्यासीतेति ॥

पाठस्तु—या ओषधीः सोमराज्ञीर्बह्वीरिति। अनुष्टुप् छन्दः।

या ओषधीर्दर्भमय्य ओषध्यः। सोमराज्ञीः सोमो राजा यासां तास्तथोक्ताः सोमो वा ओषधीनां राजेति श्रुतेः[2]। बह्वीः [3]बह्व्यः। [4]पञ्चविंशतिभिर्दर्भैर्विष्टरः क्रियते। सर्वत्र जसि बहुलं छन्दसीति पूर्वसवर्णदीर्घः [ पा ६. १. १०५, १०६ द्रः ]। शतविचक्षणाः। या उक्तरूपेण महानुभावाः सन्ति ता यूयं मह्यमस्मिन्नासने कूर्चमय आसने विष्टरेऽच्छिद्रा निविडाः सत्यस्तोदमकुर्वत्यः शर्म सुखं यच्छत कुरुत ॥३॥

मधुपर्ककर्तासनपादप्रसारणयोर्विष्टरद्वयं संपादितवांश्चेत्तदा या ओषधीरिति द्वितीयया विष्टरे पादौ प्रसारयेत्। तथा चोक्तम् [ खा गृ ४. ४. १० ]—पादयोर्द्वितीयया द्वौ चेत् ॥ वक्ष्यमाणैर्मन्त्रैः पादौ प्रक्षाल्य द्वितीयं विष्टरमुदगग्रमधस्तात् पादयोर्या ओषधीरिति द्वितीयया स्तृणुयात्[5]।

या ओषधीः सोमराज्ञीर्विष्ठिता इति। छन्दोदेवते पूर्ववत्।

अर्थस्य[6] इयान् भेदः। पृथिवीमनु [7]पादप्रसारणार्हायां पृथिव्यां सर्वत्र विष्ठिताः विविधं स्थिता व्याप्ता ओषधयः सन्तीति ॥४॥

## यतो देवीः प्रतिपश्याम्यापस्ततो मा राद्धिरागच्छतु ॥५॥

[ गो गृ ४. १०. ६; खा गृ ४. ४. ११ द्रः ]

**विराडस्य च्छन्दः। पादप्रक्षालनार्थोदकेक्षणे विनियोगः। आपो देवताः।**

**पादप्रक्षालनार्थमुदकं ढौकितं पश्यन्नर्हणीय आह—हे आपः वृष्टयः यतः यस्मात् आदित्यात् सकाशात् देवीः [8]दानादिगुणयुक्ताः युष्मान् अहं प्रतिपश्यामि। आदित्याज्जायते वृष्टिरिति स्मरणात्[9]। ततः तस्मात् सूर्यात् मा मां राद्धिः समृद्धिः आगच्छतु ॥५॥**

यतो देवीरित्ययं पादोदकावेक्षणे विनियुक्तः। सूत्रितश्च [ खा गृ ४. ४. ११ ]—अपः पश्येद् यतो देवीरितीति ॥

1 D² विष्टरहोमे
2 *T. S.* 6. 1. 9. 1
3 D² & G omit बह्व्यः.
4 M¹ & M² एकविंशतिदर्भैः
5 See Rudraskanda.
6 D² omits अर्थस्य.
7 D² omits पाद.
8 A देवनादिगुण०
9 *Manu* 3. 76

यतो देवीरिति—यजुरिदमब्देवताकम् ।

देवीर्देव्यो द्योतमाना आप [1]आपनशीलाः उक्कलक्षणान्युदकानि यतोऽहं प्रतिपश्यामि ततो मा मां राद्धिर्धनादिसंसिद्धिरागच्छत्वाभिमुख्येन प्राप्नोतु ॥५॥

**सव्यं पादमव नेनिजेऽस्मिन् राष्ट्रे श्रियं दधे ॥६॥**

**दक्षिणं पादमव नेनिजेऽस्मिन् राष्ट्रे श्रियमा वेशयामि ॥७॥**

**पूर्वमन्यमपरमन्यमुभौ पादाव्व नेनिजे राष्ट्रस्यर्ध्या अभयस्यावरुद्ध्यै ॥८॥**

[ गो गृ ४. १०. ११ ; खा गृ ४. ४. १२-१४ द्रः ]

**विराड्गायत्रमस्य मन्त्रद्वयस्य च्छन्दः। तृतीयो निगदः। सव्यदक्षिणोभयपादप्रक्षालने विनियोगः। श्रीर्देवता। अर्हणीयः सव्यं पादं प्रक्षालयन्निममाह।**

**सव्यं वामं पादम् अहम् अवनेनिजे प्रक्षालयामि। अस्मिन् राष्ट्रे विषये श्रियं लक्ष्मीं दधे धारयामि पुष्णामि वा ॥६॥**

**आवेशयामि प्रवेशयाम्यादधामि ॥७॥**

**पूर्वम् अन्यं सव्यं अपरम् अन्यं दक्षिणम्। तौ उभौ पादौ अवनेनिजे—निजिर् शौचपोषणयोः—शोधयामि प्रक्षालयामि। राष्ट्रस्य ऋद्ध्यै—ऋधु वृद्धौ—समृद्ध्यर्थम्। अभयस्य अवरुद्ध्यै अवरुद्धिः परिग्रहः ॥८॥**

सव्यमित्ययं सव्यपादावनेजने विनियुक्तः। सव्यं पादमवसिञ्चेत् सव्यमितीति हि सूत्रितम् [ खा गृ ४. ४. १२ ]।

सव्यं पादमिति—द्विपदा विराडस्य च्छन्दः। आपो देवताः।

सव्यं पादमवनेनिजेऽस्मिन् राष्ट्रे राज्ये श्रियं [2]गवादिकां दधे ॥६॥

दक्षिणं पादमिति दक्षिणपादावनेजने विनियुक्तः। तथा च सूत्रम् [ खा गृ ४. ४. १३ ]—दक्षिणं दक्षिणमितीति ॥

दक्षिणं पादमिति—द्विपदा विराडस्य च्छन्दः। आपो देवताः।

दक्षिणमपसव्यं पादमवनेनिजे। शिष्टं पूर्ववत्। आवेशयामि स्थापयामि। यद्वा ऐतरेयब्राह्मणे दक्षिणं पादमित्यादिना[3] दक्षिणपादस्य प्राथम्यम्[4] ॥७॥

1 D² आप्नुशीलाः ; G आप्तुं शीलाः
2 D² भवादिकां
3 *Ait. Br.* 8. 27
4 M¹. प्राधान्यविधानात्

पूर्वमन्यमित्यय' शेषेण पादद्वयावनेजने विनियुक्तः। उभौ शेषेणेति सूत्रितत्वात् [ खा गृ ४. ४. १४ ]। यजुर्मन्त्रोऽयमब्देवताकः।

[1]'अन्य' सव्य' पादमित्यादिना दक्षिणपादस्य प्राथम्यविधानात् पूर्वमन्यमित्यय' शेषेण पादमपर' पश्चादेव' क्रमेणोभौ पादावनेनिजे[1]। किमर्थमित्युच्यते। राष्ट्रस्य राज्यस्य ऋद्धैय समृद्धयर्थम्। उभयस्य लोकद्वयस्यावरुद्धया अवरोधनाय स्वाधीनकरणाय ॥८॥

## अन्नस्य राष्ट्रिरसि राष्ट्रिस्ते भूयासम् ॥९॥

[ गो गृ ४. १०. १२ ; खा गृ ४. ४. १५ द्र: ]

**यजुरिदमर्हणीयस्यार्घ्यप्रतिग्रहणे विनियुक्तमर्घ्यदेवताकम्।**

**हे अर्घ्य अन्नस्य त्वं राष्ट्रिः दीप्तिः असि भवसि। अहमपि ते तव प्रसादेनान्नस्य राष्ट्रिः—राजृ दीप्तौ—दीप्तिः भूयासं भवानि ॥९॥**

अयमुत्तरश्च द्वौ[2] यजूरूपौ अब्देवताकौ। हे उदकमयार्घ्य त्वमन्नस्य राष्ट्रिः[3] राजयिता प्रवर्धयितासि। अहमपि तव स्वीकरणाद्राष्ट्रिरन्नस्य राजयिता प्रख्यापयिता भूयासम्। बह्वन्नस्वामी भूयासमित्यर्थः ॥६॥

## यशोऽसि यशो मयि धेहि ॥१०॥

[ गो गृ ४. १०. १३ ; खा गृ ४. ४. १६ ]

**यजुरिदमाचमनीयदैवतमाचमनीयं गृह्णीयादित्यर्थे विनियुक्तम्।**

**हे आचमनीय यतस्त्वं यशः असि कीर्तिरूप' भवसि अतो मयि यशः धेहि निधेहि मां यशस्विनं कुर्वित्यर्थः ॥१०॥**

यशोऽसीत्याचमने विनियुक्तः। यशोऽसीत्याचमनीयमिति सूत्रितम् [ खा गृ ४. ४. १६ ]।

हे स्नानीयोदक[4] त्व' यशोऽसि कीर्तिसाधन' भवसि। अतो यशो मयि धेहि स्थापय ॥१०॥

## यशसो यशोऽसि ॥११॥

[ गो गृ ४. १०. १४ ; खा गृ ४. ४. १७ ; आप म २. १०. १ ]

**यजुरिदमर्हणीयस्य मधुपर्कसंग्रहणे विनियुक्तं मधुपर्कदेवताकम्।**

1 See *Ait. Br.* 8. 27. D[2] omits the whole sentence with the remark that the commentary is defective.
2 M[1] उभौ
3 D[2] राष्ट्री
4 M[1] स्नानीयद्रव्य

**हे मधुपर्क यशः कीर्तिरिव मधुरो यथा त्वम् असि भवसि तथा त्वद्योगा-दहमपि यशसः कीर्तिमान् सम्पाद्य इति ॥११॥**

यशस इत्ययं मधुपर्कप्रतिग्रहे विनियुक्तः। सूत्रितं च [ खा गृ ४. ४ १७ ]—यशसो यशोऽसीति मधुपर्कमिति ॥ प्रतिगृह्णीयादिति शेषः। अत्र [1]सर्वत्र मन्त्रेण[1] प्रतिग्रहः। तत्तदनुष्ठानं तु तुष्णीमेवेत्यवगन्तव्यम्।

यशसो यशोऽसीति। यजुर्मन्त्रोऽयं मधुपर्कदेवताकः।

हे दध्यादिसंघातात्मक मधुपर्कद्रव्य त्वं यशसः—अन्ननामैतत्—व्रीह्याद्यन्नस्यापि यशोऽसि सारभूतमन्नमसि। न हि दधिमध्वादिभ्योऽतिरिक्तं सारवदन्नमस्मिँल्लोके ॥११॥

**यशसो भक्षोऽसि महसो भक्षोऽसि**
**श्रीभक्षोऽसि श्रियं मयि धेहि स्वाहा ॥१२॥**

[ गो गृ ४. १०. १५ ; खा गृ ४. ४. १८ द्रः ]

**निगदोऽयमर्हणीयस्य मधुपर्कप्राशने विनियुक्तो मधुपर्कदेवताकः।**

**हे मधुपर्क यतस्त्वं यशसो भक्षोऽसि यशस्विनां कीर्तिमतां भक्षः असि भवसि। महसो भक्षोऽसि महस्तेजः महस्विनामपि भक्षोऽसि। श्रीभक्षोऽसि श्रीमतां भक्षोऽसि। त्वद्भक्षणेन यशो महः श्रीश्च भवति यतः अतः श्रियं मयि धेहि निधेहि श्रीमन्तं मां कुर्वित्यर्थः ॥१२॥**

यशस इत्यादिषु त्रिष्वपि मन्त्रेष्वेकैकेनैकैकवारं[2] मधुपर्कं पिबेत्। सूत्रितं च [ खा गृ ४. ४. १८ ]—त्रिः पिबेद् यशसो महसः श्रिया इतीति ॥

पाठस्तु—यशसो भक्षोऽसीति।

श्रियं मयि [3]धेहि स्वाहेत्येतत्[3] पूर्ववाक्यद्वयेऽपि[4] मन्त्रशेषस्येहोपलक्षणार्थम्। अतो यशो मयि धेहि महो मयि धेहीत्येवं यथालिङ्गमूहेत्। छन्दोदेवते पूर्ववत्।

हे मधुपर्कपदार्थ त्वं यशसः कीर्तेरन्नस्य वा भक्षोऽस्यभ्यवहारसाधनोऽसि। अतो यशो मयि धेहि। स्वाहेति हविरभिधानम्। मधुपर्काख्यं हविरात्मनि हुतमस्त्वित्यर्थः। एवमुत्तरयोरपि[5] योज्यम्। मह इति पूज्यं तेज उच्यते। श्रीः प्रसिद्धा ॥१२॥

1 D² सर्वमन्त्रेण
2 D² ०ष्वेकैकेनैकवारं
3 D² धेहीत्येतत्
4 D² omits it.
5 D² ०मुत्तरेष्वपि

मुञ्च गां वरुण पाशाद्द्विषन्तं मेऽभि धेहि ।
तं जह्यमुष्य चोभयोरुत् सृज गामत्तु तृणानि पिबतूदकम् ॥१३॥

[ गो गृ ४. १०. १६ ; खा गृ ४. ४. २१ द्रः ]

बृहत्यस्य च्छन्दः । पूर्ववद्गोमोक्षणे विनियोगः ।

अर्हणीयकर्मसमाप्तौ अर्हणीय आह—एतां गाम् अर्हणीयां वरुण पाशात् बन्धनात् मुञ्च मोचय मोक्षणं कृत्वा उत्सृज विसर्जय। सृज विसर्गे। सेयं स्वेच्छया अत्तु भक्षयतु तृणानि। उदकं च पिबतु। सा गौर्मोक्षिता उत्सृष्टा च प्रार्थ्यते—हे अर्हणीये मे मम द्विषन्तं द्वेष्टारं अभिधेहि अभिभव। किञ्च तं द्विषन्तम् अमुष्य अर्हणकर्तुः मम च अर्हणीयस्य उभयोः सम्बन्धेन जहि विनाशय ॥१३॥

मुञ्च गामित्यादिमन्त्रद्वयेन गां प्रतिगृहीतामनुमन्त्रयेत। सूत्रितं च [ खा गृ ४. ४. २१ ]—गां वेदितामनुमन्त्रयेत मुञ्च गामितीति ॥

तत्र प्रथमः—मुञ्च गामिति। पङ्क्तिरस्य च्छन्दः। वरुणो देवता।

हे वरुण वारक बन्धनाभिमानिन् देव गां बद्धां पाशात् मुञ्च विमुक्तां कुर्वित्यर्थः। तर्हि कं बध्नामीति[1] चेदुच्यते मे मम द्विषन्तं द्वेष्टारमभिधेहि। अभिपूर्वो दधातिर्बन्धनार्थे। बधानेत्यर्थः। न केवलमस्मद्द्वेषिणं किं त्वमुष्य च दातुरपि विष्णुशर्मणो द्विषन्तमपि। किञ्च बद्ध्वा उभयोर्दातुः प्रतिग्रहीतुश्च द्वेषिणं जहि तस्य हिंसां कुरु। किञ्च गामुत्सृज परित्यज। किमर्थमित्युच्यते। तृणान्यत्तु भक्षयतूदकमपि पिबतु ॥१३॥

माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः ।
प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥१४॥

[ ऋ स ८. १०१. १५ ; आ गृ १. २४. ३२ ; पा गृ १. ३. २७ । तै आ ६. १२. १ ; आप म २. १०. ६ ; हि गृ १. १३. १२—प्र णु । गो गृ ४. १०. २० द्रः ]

त्रिष्टुबस्य च्छन्दो गवामनुमन्त्रणे विनियोगो गौर्देवता ।

येयं ममार्हणीयस्यालम्भनार्थमर्हणीया गौरानीता सैषा माता रुद्राणां दुहिता वसूनां स्वसा आदित्यानाम् अमृतस्य दुग्धदधिघृतादेः नाभिः

1 D² omits इति.

**उत्पत्तिकारणम् यतः अतः एनां गाम् अनागाम् अनागसमपापामनपराधां वा अदितिम् अदीनाम् हे यजमानपरिचारकाः यूयं मा वधिष्ट मा प्राणैर्वियोजयत। अहमेवं जनाय यजमानाय चिकितुषे—कित ज्ञाने—विदुषे ज्ञानसम्पन्नाय प्र नु वोचम्। नु वितर्के। प्रवोचं प्रकर्षेणोक्तवानस्मि गोवधं मा कुरुतेति ॥१४॥**

**इति भट्ट-गुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये**
**द्वितीयप्रपाठके अष्टमः खण्डः ॥**

**॥*॥ इति भट्ट-दामुकसूनूना गुणविष्णुना कृतं**
**छान्दोग्यमन्त्रभाष्यं समाप्तम् ॥*॥**

अथ द्वितीयः—माता रुद्राणामिति। त्रिष्टुबस्य च्छन्दः। विश्वेदेवा देवताः।

इयं गौ रुद्राणामेकादशसङ्ख्याकानां माता निर्मात्री। तथा वसूनामष्टसङ्ख्याकानां दुहिता पुत्री। आदित्यानां द्वादशसङ्ख्याकानां स्वसा स्वसृस्थानीया। अमृतस्य यज्ञस्य स्वर्गस्य च नाभिर्नाभिवद्बन्धिका आज्यक्षीरादिहोमसाधनद्रव्यस्योत्पादकत्वात्। चिकितुषे युक्तायुक्तपरिज्ञात्रे जनाय—जात्येकवचनम्—जनेभ्यः। नु क्षिप्रं प्रवोचं प्रब्रवीमि। किमिति चेदुच्यते। अनागामनपराधां गामुक्तरूपेण महानुभावां [1]अदितिं अदितिवद्देवादिसर्वमातृभूतां[1] मा वधिष्ट। हे देवा हिंसां मा कुरुत। ओमित्यङ्गीकारे। अहन्तव्येत्यङ्गीकृत्योत्सृजत ॥१४॥

॥*॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणमन्त्रपर्वणि
द्वितीये प्रपाठके अष्टमः खण्डः ॥*॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

॥●॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे सामब्राह्मणे मन्त्रपर्वणि द्वितीयः प्रपाठकः ॥●॥

## समाप्तं भाष्यद्वयोपेतं छान्दोग्यब्राह्मणम्

---

1 D² & G omit it.

# I. Index of Mantras

## II. Index of Important Words

# III. WORKS AND AUTHORS CITED BY GUNAVIṢṆU

# IV. CITATIONS IN GUNAVISNU'S COMMENTARY

[ *The Sūtras of Gobhila and Pāṇini have not been included in this list* ]

## V. WORKS AND AUTHORS CITED BY SĀYAṆA

## VI. CITATIONS IN SĀYAṆA'S COMMENTARY

[ *Quotations from Khādira, Rudraskanda and Pāṇini have not been recorded here* ]

# ERRATA

[ Insignificant cases have not been shown ]

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| Page | 9 | line | 1 | for | छादयति | read | छादयन्ति |
| ,, | 9 | ,, | 16 | ,, | दिब्यो | ,, | दिव्यो |
| ,, | 12 | ,, | 4 | ,, | कस्त्वमसीति | ,, | कस्त्वमसीति |
| ,, | 20 | ,, | 3 | ,, | पश्वात् | ,, | पश्चात् |
| ,, | 20 | ,, | 10 | ,, | सम्पराणा | ,, | सम्पन्ना |
| ,, | 28 | ,, | 20 | ,, | घनपुष्ट्ये | ,, | धनपुष्ट्ये |
| ,, | 30 | ,, | 1 | ,, | सप्रपदी | ,, | सप्तपदी |
| ,, | 31 | ,, | 14 | ,, | वधुं | ,, | वधूं |
| ,, | 34 | ,, | 9 | ,, | अगतीयं | ,, | जगतीयं |
| ,, | 35 | ,, | 11 | ,, | बध्वां | ,, | वध्वां |
| ,, | 35 | ,, | 19 | ,, | शश्रूां | ,, | श्वश्रूां |
| ,, | 40 | ,, | 4 | ,, | ०ग्रन्यिना | ,, | ०ग्रन्थिना |
| ,, | 47 | ,, | 20 | ,, | ०श्वतुर्भिः | ,, | ०श्वतुर्भिः |
| ,, | 57 | ,, | 6 | ,, | गर्भ | ,, | गर्भे |
| ,, | 57 | ,, | 12 | ,, | म्रजायाः | ,, | प्रजायाः |
| ,, | 70 | ,, | 1 | ,, | त्र्यायुषं तत्ते अस्तुत्र्यायुषम् | ,, | त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुष-मगस्त्यस्य त्र्यायुषं यद्देवानां त्र्यायुषं तत्ते अस्तु त्र्यायुषम् |
| ,, | 71 | ,, | 12 | ,, | प्रत्तेद्दायु | ,, | प्रेत्तेद्दायु |
| ,, | 79 | ,, | 36 | ,, | खा गृ १. २. १७ | ,, | खा गृ २. ४. १७ |
| ,, | 91 | ,, | 2 | ,, | आचायः | ,, | आचार्यः |
| ,, | 125 | ,, | 26 | ,, | 2. 2. 4 | ,, | 2. 2. 14 |
| ,, | 127 | ,, | 11 | ,, | पाणा । कृत्वा | ,, | पाणीकृत्वा |
| ,, | 135 | ,, | 1 | ,, | ०शरमादयः | ,, | ०शरभादयः |
| ,, | 135 | ,, | 21 | ,, | पषा | ,, | एषा |
| ,, | 138 | ,, | 3 | ,, | षूजिता | ,, | पूजिता |
| ,, | 160 | ,, | 19 | ,, | ०मासब्रती | ,, | ०मासव्रतो |
| ,, | 163 | ,, | 2 | ,, | संवन्धिरूपो | ,, | संबन्धिरूपो |
| ,, | 190 | ,, | 12 | ,, | चन्द्राका | ,, | चन्द्रार्कौ |

